लवमित्तु वि उस्सुत्तु जु इत्थु[124] पयंपियइ
तसु विवाउ अइथोउ वि केवलि दंसियइ ।
ताइं जि जे उस्सुत्तइं कियइँ निरंतरइं[125]
ताह दुक्ख जे हुंति ति भूरि भवंतरइ ।। २९ ।।

[ लवमात्रमप्युत्सूत्रं यदत्र प्रजल्प्यते
तस्य विपाकोऽतिस्तोकोऽपि केवलिना दर्श्यते ।
तान्येव ये उत्सूत्राणि कुर्वन्ति निरन्तरं
तेषां दुःखानि यानि भवन्ति तानि भूरिभवान्तराणि ।। २९ ।। ]

लवमात्रमप्युत्सूत्रं यदत्र प्रजल्प्यते, तस्य विपाकोऽतिस्तोक आस्तां समस्तः केवलिनैव दर्श्यते । तान्येव 'जीति पादपूरणे' ये गुरुकर्माण उत्सूत्राणि कुर्वन्ति वचन-कायाभ्यां निरन्तरं तेषां दुःखानि यानि भवन्ति तानि भूरिभवान्तराणि येषु प्रभूतजन्मसहस्रानुभवनीयानीति भाव इत्यर्थः ।। २९ ।।

अथ तेषामेव किञ्चिच्चेष्टितमाह—

अपरिक्खियसुय[126]निहसिहिं नियमइगवियँहि
लोयपवाहपँयट्टिहिं[127] नामिण सुविहियँइं ।
अवरुप्परमच्छरिण निदंसियसगुणिहिं[128]
पूआविज्जइ[129] अप्पउँ जिणु जिव निग्घिणिहिं ।। ३० ।।

[ अपरीक्षितश्रुतनिकषैर्निजमतिगर्वितै-
र्लोकप्रवाहप्रवृत्तैर्नाम्ना सुविहितैः ।
परस्परमत्सरेण निदर्शितसद्गुणैः
पूज्यते आत्मा जिन इव निर्घृणैः ।। ३० ।। ]

अपरीक्षितश्रुतनिकषैर्निजमतिगर्वितैर्लोकप्रवाहप्रवृत्तैरत एव नामतः सुविहितैः। आस्तां शुद्धचारित्रसाधुविषये किन्तु परस्परतोऽपि मत्सरेण निदर्शितसद्गुणैरितर-निन्दया पूज्यते आत्मा जिन इव निःशूकैरित्यर्थः ।। ३० ।।

एवं च सति—

---

१२४ ख. ग. इत्थ । १२५ ख. ग. निरंतरह । १२६ क. °सुह° । १२७ ख. ग. °पयट्टइं । १२८ ख. ग. सग्गुणिहिं । १२९ ख. ग. पूयाविज्जइं ।

३

**इह अणुसोयपयट्टह संख न कु वि करइ**
**भवसायरि तिं[130] पडंति न इक्कु वि उत्तरइ ।**
**जे पडिसोय पयट्टहि अप्प वि जिंय[131] धरह**
**अवसय सामिय हुंति ति निव्वुइपुरवरह ॥ ३१ ॥**

[ इहानुस्रोतःप्रवृत्तानां सङ्ख्यां न कोऽपि करोति
भवसागरे ते पतन्ति नैकोऽप्युत्तरति ।
ये प्रतिस्रोतः प्रवर्तन्तेऽल्पा अपि जीवा धराया-
मवश्यं स्वामिनो भवन्ति ते निर्वृतिपुरवरस्य ॥ ३१ ॥ ]

अनुश्रो(स्रो)तोमार्गप्रवृत्तानां सङ्ख्यां न कोऽपि करोति बहुत्वात् । भवसागरे[132] ते निपतन्ति । नैकोऽप्युत्तरति निविडकर्मत्वात् । ये पुनरल्पा अपि जीवाः प्रतिश्रो-(स्रो)तोमार्गे प्रवर्तन्ते धरायाम्, अवश्यं स्वामिनस्ते भवन्ति निर्वृतिपुरवरस्ये-त्यर्थः ॥ ३१ ॥

**जं आगम-आयरणिहिं [133]संहुं न विसंवयइ**
**भणहि[134] त वयणु निरुत्तु[135] न सग्गुणु जं चयइ ।**
**ते वसंति गिहिगेहि[136] वि होइ तमायियणु[137]**
**गइहि तित्थु[138] लहु लब्भइ मुत्तिउ सुहरयणु ॥ ३२ ॥**

[ यदागमाचरणाभ्यां सह न विसंवदाति
भणन्ति तद् वचनं निश्चितं न सद्गुणो यत् त्यजति ।
ते वसन्ति गृहिगेहेऽपि भवति तदायतनं
गतैस्तत्र लघु लभ्यते मुक्तेः सुखरत्नम् ॥ ३२ ॥ ]

यदागमाचरणाभ्यां न विसंवदति, भणन्ति तद् वचनम्, निश्चितं न सद्गुणो यत् त्यजंति[139] । ते चैवंविधाश्चारित्रपवित्रा वसन्ति यत्र गृहिगेहेऽपि तदायतनं भवति तद्वासपवित्रत्वात्[140] ज्ञानादिलाभभावाच्च । गतैः सद्भिस्तत्र लभ्यते मुक्ति-सम्बन्धिसुखरत्नम् । यथा क्वचित् सुप्रसन्न ईश्वरे मौक्तिकं प्राप्यते, तथेहापीति भाव इत्यर्थः ॥ ३२ ॥

अथ विधिचैत्यानिश्राकृतप्रसङ्गत[141] एव निश्राचैत्यादिस्वरूपमाह—

---

१३० क. निप° । १३१ ख. जय । १३२ क. सागरे नि° । १३३ ख. ग. सुहु । १३४ ख. ग. भणिहिं । १३५ क. निरत्तु । १३६ ख. ग. °गेहु । १३७ क. तमायणु १३८ ख. ग. तत्थु । १३९ ग. त्यजंति । १४० ख. ग. सद्वास° । १४१ क. °प्रसंग एव ।

पासत्थाइविबोहिय केइ जि सावयइं
कारावँहि जिणमंदिरु तंमइभाँवियइं[142] ।
तं किर निस्साचेइउ अववाँयिण[143] भणिउ
तिहि[144]—पव्विहि तहि कीरइ वंदणु कारणिउ ॥ ३३ ॥

[ पार्श्वस्थादिविबोधिताः केचिच्छ्रावकाः
कारयन्ति जिनमन्दिरं तन्मतभाविताः ।
तत् किल निश्राचैत्यमपवादेन भणितं
तिथि–पर्वसु तत्र क्रियते वन्दनं कारणिकम् ॥ ३३ ॥ ]

देशतः पार्श्वस्थादिभिर्विबोधिताः केचिच्छ्रावकाः कारयन्ति जिनमन्दिरं तन्मतभाविताः । तत् किल निश्राचैत्यमपवादेन भणितमायतनम् । अत एव तिथिषु पर्वसु[145] चाष्टमी-चतुर्दशी-चतुर्मासक-पर्युषणादिषु क्रियते वन्दनकं कारणिकम् अनिश्राचैत्याभावेन काँदाचित्कम्[146]। तत्र हि लिङ्गिनो मध्ये न निवसन्ति । यत उक्तं श्रीमज्जिनवल्लभसूरिभिरागमोद्धारे—

"ओसन्ना[(१)] चिय तत्थेव इंती चेइयवंदगा ।
जेसि निस्साइ तं भवणं सड्ढाईहि वि कारियं ॥" इत्यर्थः ॥ ३३ ॥

अथानायतनं विवक्षुः प्रकल्पोक्तभङ्ग्यन्तरेणाह—

जँहि लिंगिय जिणमंदिरि जिणदव्विण कयइं
मढि वसंति आसायण कँरँहिं[147] महंतियँइं ।
तं पकप्पि परिवन्निउ साहम्मियथलिय
जहिं गय वंदणकज्जिण न सुदंसण मिलिय ॥ ३४ ॥

[ यत्र लिङ्गिनो जिनमन्दिरे जिनद्रव्येण कृते
मठे वसन्त्याशातनाः कुर्वन्ति महतीः ।
तत् प्रकल्पे परिवर्णितं साधर्मिकस्थली
यत्र गता वन्दनकार्येण न सुदर्शनस्य मिलिताः ॥ ३४ ॥ ]

यत्र किल लिङ्गिनो लिङ्गमात्रसाधर्मिका जिनमन्दिरे अथवा जिनद्रव्यकृते मठे वा वसन्ति । वसन्तश्च सन्तो महतीराशातना भोजन–शयनादिभिः कुर्वन्ति । तत् प्रकल्पे निशीथाध्ययने परिवर्णितं साधर्मिकस्थलीति देवद्रोणीति नाम्ना । यत्र

(१) अवसन्ना एव तत्रैव यन्ति चैत्यवन्दकाः ।
येषां निश्रया तद् भवनं श्राद्धादिभिरपि कारितम् ॥

१४२ ख. ग. °भावियइं । १४३ क. अववायणा । १४४ ख. ग तिहिं पव्वहिं । १४५ क. पर्वाष्टमी° । १४६ ख. ग. कदा° । १४७ ख. ग. करिहिं ।

गता भक्तिमन्तो वन्दनकार्येण न सुदर्शनस्य शोभनसम्यक्त्वस्य मिलिताः क्षणमात्र-मप्यनायतनसेवाया मिथ्यात्वहेतुत्वादित्यर्थः ॥ ३४ ॥

अथौघनिर्युक्त्याद्युक्तरूपेणानायतनमाह—

**ओहनिज्जुत्तावस्सयपयरणदंसियउ**
**तमणाययणु जु दावइ दुक्खपसंसियउ ।**
**[148]तहिं कारणि वि न जुत्तउ सावयजणगमणु**
**[149]तहिं वसंति जे लिंगिय ताहि वि पयनमणु ॥ ३५ ॥**

[ ओघनिर्युक्त्यावश्यकप्रकरणदर्शितं
तदनायतनं यद् दर्शयति दुःखप्रशंसितः ।
तत्र कारणेऽपि न युक्तं श्रावकजनगमनं
तत्र वसन्ति ये लिङ्गिनस्तेषामपि पदनमनम् ॥ ३५ ॥ ]

ओघनिर्युक्त्यावश्यकादिसिद्धान्तदर्शितं तच्चैत्यमनायतनं यो दर्शयत्यविधिप्रसूतगुण-त्वाद् दुःखेन महता कष्टेन प्रशंसितस्तावकैः । अथवा यत् अनायतनचैत्यं कर्तृप्रशं-सितं सत् दुःखं नरकादिगतिसम्बन्धि दर्शयति प्रशंसकानां तत्र कारणेनाप्यनिश्रा-चैत्याभावरूपेण ।

" नाणस्स[1] दंसणस्स य चरणस्स य जत्थ होइ वाघाओ ।
वज्जिज्जवज्जभीरू अणाययणवज्जओ खिप्पं ॥ "

इति वचनात् तत्र च केवलाविधिदर्शनेन लिङ्गिसंसर्गेण च सम्यक्त्वादिव्याघा-तसम्भवात् न युक्तं श्रावकजनस्य गमनम् । तत्र ये वसन्ति लिङ्गिनस्तत्पदवन्द-नमपि न युक्तमित्यर्थः ॥ ३५ ॥

अथ तत्र गमने दोषमाह—

**जाइज्जइ तहिं वावि(ठाणि) ति नमिँयँहिं इत्थु जइ**
**गय नमंतजण पावहि गुणगणवुड्ढि जइ ।**
**गइँहि तत्थु[150] ति नमंतिहिं पाउ जु पावियइ**
**गमणु नेमणु[151] तहिं निच्छँइं सगुणिहिं वारियइ ॥ ३६ ॥**

( १ ) ज्ञानस्य दर्शनस्य च चरणस्य च यत्र भवति व्याघातः ।
वर्जयेदवद्यभीरुरनायतनवर्जकः क्षिप्रम् ॥

१४८ क. तहि । १४९ ख. ग. यदायतन°। १५० क. तित्थु जि। १५१ ख. ग. नमणुं जं तहिं।

[ गम्यते तत्र स्थाने ते नम्यन्तेऽत्र यदि
गता नमज्जनाः प्राप्नुवन्ति गुणगणवृद्धिं यदि ।
गतैस्तत्र तान् नमद्भिः पापं यदि प्राप्यते
गमनं नमनं तत्र निश्चयेन सगुणैर्वार्यते ॥ ३६ ॥ ]

गम्यते एव तत्र स्थाने ते च लिङ्गिनः प्रणम्यन्ते, अत्र चैत्ये यदि कथंचिद् गताश्च जना नमन्तः प्राप्नुवन्ति गुणगणवृद्धिं यदि, तदा तत्र युक्तमेव गमनमिति शेषः । परं गतैः सद्भिस्तत्र तान् नमद्भिश्च '[1]पासत्थाई वंदमाणस्स' इत्यादिवचनात् पापमेव प्राप्यतेऽतो गमनं तन्नमनं च तत्र निश्चयतो निश्चयनयेन सगुणैर्गीतार्थैर्वार्यत इत्यर्थः ॥ ३६ ॥

अथ लिङ्गिनामिव केषाञ्चिद् वसतिनिवासिनामपि भावानायतनत्वेनाद्रष्टव्य-[152]त्वमाह—

वसहिहिं वसहिं बहुत्तउसुत्तपयंपिरइँ
[153]करहिं किरिय जणरंजण निच्चु वि दुक्करयँ ।
परि सम्मत्तविहीण ति हीणिहि सेवियहिं
तिहिं सहुं दंसणु सग्गुण कुणहिं न पावियहिं ॥ ३७ ॥

[ वसतौ वसन्ति प्रभूतोत्सूत्रप्रजल्पाकाः
कुर्वन्ति क्रियां जनरञ्जनाय नित्यमपि दुष्कराम् ।
परं सम्यक्त्वविहीनास्ते हीनैः सेव्यन्ते
तैः सह दर्शनं सद्गुणाः कुर्वन्ति न पापिभिः ॥ ३७ ॥ ]

वसतौ वसन्ति परं प्रभूतोत्सूत्रप्रजल्पाकाः कुर्वन्ति क्रियां पुनर्जनरञ्जनार्थं नित्यमपि दुष्करामपि प्रभूतमलधारणमलिनतरवस्त्रचतुर्थरसि[154]कापानादिकां परं ते सम्यक्त्वविहीना उत्सूत्रभाषकत्वात् हीनैरेव सम्यक्त्वादिविकलैरेव सेव्यन्ते । यतस्तैः सह दर्शनमपि सद्गुणाः सच्चारित्रिणो न कुर्वन्ति पापिभिरित्यर्थः ॥ ३७॥

अथ चैत्यत्रयेऽपि गमनादिविषयविभागमाह—

उस्सग्गिण विहिचेइउ पढमु प[155]य्यासियउ
निस्साकडु [156]अववाइण दुइउ निदंसियउ ।
[27]जँहि [157]किर लिंगिय नि[158]वसँहि तमिह अणाययणु
[28]तँहि निसिद्धु सिद्धंति वि धम्मियजणगमणु ॥ ३८ ॥

(१) पार्श्वस्थादीन् वन्दमानस्य ।

१५२ क. नाद्रष्टव्यमाह । १५३ क. करहि । १५४ ख. ग. °रसिकपा° । १५५ क. पयासिउ । १५६ ख. ग. यवाव° । १५७ क. किरि । १५८ ख. ग. वसहिं ।

[ उत्सर्गेण विधिचैत्यं प्रथमं प्रकाशितं
निश्राकृतमपवादेन द्वितीयं निदर्शितम् ।
यत्र किल लिङ्गिनो निवसान्ति तदिहानायतनं
तत्र निषिद्धं सिद्धान्तेऽपि धार्मिकजनगमनम् ॥ ३८ ॥ ]

उत्सर्गेण विधिचैत्यं गमनयोग्यतया प्रथमं प्रकाशितम् । निश्राकृतं त्वपवादेन द्वितीयं तिथि-पर्वादिषु गमनयोग्यं निदर्शितम् । यत्र लिङ्गिनो निवसन्ति तत् तृतीयमनायतनमिति दर्शितम्, तत्र निषिद्धमपवादतोऽपि धार्मिकजनगमनम्; कदाचिदत्यन्तापवादविषयत्वात् तस्येत्यर्थः ॥ ३८ ॥

अत एवाह—

**विणु कारणि तँहि[157] गमणु न कुणँहि[158] जि सुविहियइं**
**तिविहु जु चेइउ कहइ सु साहु वि मंनियइ ।**
**तं पुण दुविहु कहेइ जु सो अवगन्नियइ**
**तेण लोउ इह सयलु वि भोलँउ[159] धुंधियइ ॥ ३९ ॥**

[ विना कारणं तत्र गमनं न कुर्वन्ति सुविहिताः
त्रिविधं यश्चैत्यं कथयति स साधुरपि मन्यते ।
तत् पुनर्द्विविधं कथयति यः सोऽवगण्यते
तेन लोक इह सकलोऽपि मुग्धो विप्रतार्यते ॥ ३९ ॥ ]

विना कारणं दुष्टजनविहितधर्मभ्रंशादिभयमन्तरेण तत्रानायतने गमनं न कुर्वन्ति सुविहिताः सदाचाराः श्रावकादयोऽपि । एवं च सति त्रिविधं चैत्यं यः कथयति अस्तित्वेन प्रतिपादयति, स साधुरपि मन्यते । तत् पुनर्द्विविधमनायतनवर्जनेन कथयति यः, स साधुरप्यवगण्यते; शुद्धसिद्धान्तविचारासिद्धत्वादनायतनस्यापि । तेन द्विविधचैत्यकथकेन लोकः सकँलोऽपि[160] मुग्धप्रायो (१)'निस्सकडमनिस्सकडे वा वि चेइए' इत्यादि वदता विप्रतार्यत इत्यर्थः ॥ ३९ ॥

**इय निप्पुंन्नह[161] दुलह सिरिजिणवल्लहिण**
**तिविहु निवेइउ चेइउ सिवसिरिवल्लहिण ।**
**उस्सुत्तँइं वारंतिण[162] सुत्तु कहंतइण[163]**
**इह नवं व जिणसासणु दंसिउ सुम्मइण ॥ ४० ॥**

( १ ) निश्राकृतमनिश्राकृतं वाऽपि चैत्ये ।

१५९ ख. ग. भोलिवि । १६० ख.ग. सर्वोपि । १६१ क. निप्पुन्नहि । १६२ ख. वारितिण । १६३ क, कहत्तइण ।

[ इति निष्पुण्यानां दुर्लभेन श्रीजिनवल्लभेन
त्रिविधं निवेदितं चैत्यं शिवश्रीवल्लभेन ।
उत्सूत्राणि वारयता सूत्रं कथयता
इह नवमिव जिनशासनं दर्शितं सन्मतिना ॥ ४० ॥ ]

इति निष्पुण्यानां दुर्लभेन श्रीजिनवल्लभेन त्रिविधं निवेदितं चैत्यं शिवश्रीवल्लभेन । उत्सूत्राणि रात्रिस्नानादीनि वारयता सूत्रं सूत्रार्थं विधिरूपं कथयता, तथा चोत्सूत्रभाषकप्रवर्तितकेवलाविधिप्रवणचैत्यादिदर्शनप्रच्छादितविधिप्रकाशम् । इह लोके नवमिव जिनशासनं दर्शितं सन्मतिना लोकोत्तरबुद्धिभाजेत्यर्थः ॥४०॥

इक्कवयणु जिणवल्लहु पहु[164] वयणइं[165] घणइं
किं व जंपिवि जणु सक्कइ सक्कु वि जइ मुणइ[166] ।
तसु पयभत्तह सत्तह सत्तह भवभयह[167]
होइ अंतु सुनिरुत्तउ तव्वयणुज्जयह ॥ ४१ ॥

[ एकवचनो जिनवल्लभः प्रभुर्वचनानि घनानि
किमिव जल्पितुं जनः शक्नोति शक्रोऽपि यदि जानाति ।
तस्य पदभक्तानां सत्त्वानां सप्तानां भवभयानां
भवत्यन्तः सुनिश्चितस्तद्वचनोद्यतानाम् ॥ ४१ ॥ ]

'जणुशब्दो द्वितीयपादगतो जानीहि त्वमेवैतदित्यर्थे लोकरूढितो बोद्धव्यः' ततश्च भोः सखे ! त्वमेवैतज्जानीहि । एकवचनः श्रीजिनवल्लभः प्रभुः कथं बहूनि वचनानि श्रीवीरषष्ठ[168]कल्याणक-विधिविषयपारतन्त्र्य-चैत्यसाधुगतकृत्याकृत्यषट्कप्रमाणकल्प-साधुप्रावरणकषायादिद्रव्याहृतजलग्रहणादीनि कथं जल्पितुं समस्तसङ्घसमक्षं प्रकाशयितुं शक्नोति । एकवचनशक्तेरनेकवचनजल्पनविरोधात् । तत्परिहारश्चैवम्-एकमेकरूपमेव पूर्वापराविरोधेन सिद्धान्ताविरुद्धगीतार्थाचरणानुसारि वचनं यस्य तस्य च श्रीमन्महावीरषष्ठकल्याणकाद्यनेकवचनजल्पनविरोधः सर्वथा नास्ति, सिद्धान्ताद्यनुसारित्वात् सर्वेषां वचनानाम् । तानि हि वचनान्याधुनिकसाधुप्रवर्तनेन आच्छादितान्येवासन् । अत एव शक्रोऽपि विबुधेश्वरतया लोकोत्तरप्रज्ञातिशयशालित्वेन लोकोत्कृष्टोऽपि यदि कथञ्चिन्महाकृच्छ्रेण जानाति विशिष्ट[169]युगप्रधानगम्यत्वात् पूर्वोक्तार्थानाम् । अथवा एवं योजना कार्या-जिनवल्लभप्रभुवचनानि प्रभूतानि पूर्वोक्तान्येकवदनो जनोऽस्मदादि[170]ः कथं जल्पितुमपि सभा-

---

१६४ ख. ग. बहु । १६५ क. वयणइं । १६६ ख. ग. सुणेइ । १६७ क. °भवयह । १६८ क. °षट्कल्याणिक । १६९ ख. ग. °गुणप्र° । १७० क. °दादिर्ज° ।

समक्षं प्ररूपयितुमपि शक्नोति ? आस्तां सम्यक् कर्तुं कारयितुं चेत्यात्मायः[171] । तस्य प्रभोः पदभक्तानां सत्त्वानाम् '[(1)]इहपरलोयाणमकम्हा आजीवमरणमसिलोए' इति सप्तानां भवभयानां भवत्यन्तः क्षयः सुनिश्चितस्तद्वचनकरणोद्यतानामित्यर्थः॥४१॥

इक्ककालु जसु विज्ज असेस वि वयणि ठिय
मिच्छदिट्ठि वि वंदहिं किंकरभावट्ठिय ।
ठावि(णि) ठावि(णि) विहिपक्खु वि जिण अप्पडिखलिउ
फुडु पयडिउ निक्कवडिण परु अप्पउँ कलिउ ॥ ४२ ॥

[ एककालं यस्य विद्या अशेषा अपि वदने स्थिता
मिथ्यादृष्टयोऽपि वन्दन्ते किङ्करभावास्थिताः ।
स्थाने स्थाने विधिपक्षोऽपि येनाप्रतिस्खलितः
स्फुटं प्रकटितो निष्कपटेन परमात्मानं कलयित्वा ॥ ४२ ॥ ]

एककालं युगपदेव यस्य विद्यास्तर्कादयोऽशेषा अपि वदने स्थिताः । मिथ्यादृष्टयोऽन्यदर्शनस्थिता अपि श्रीनरवर्ममहाराजपण्डिताः पञ्चविंशतितमोऽयं तीर्थंकर इति प्रतिपादयन्तो वन्दन्ते किङ्करभावस्थिता बहुमानातिशयप्रवर्तित-सादरवचनाः। स्थाने स्थाने सर्वत्र विधिपक्षोऽपि येनाप्रतिस्खलितो निराकर्तुरभावेन स्फुटः[172] प्रकटितो निष्कपटेन निश्छद्मना परोऽपि निराकरणीय आत्मा च निराकर्ता द्वयमपि कलयित्वा यथावस्थितत्वेन तच्छक्तिमाकलय्य स्वसामर्थ्येनेत्यर्थः ॥४२॥

तसु पयपंकयउ[173] पुन्निहिं[27] पाविउ जण-भमरु
सुद्धनाण-महुपाणु करंतउ[174] हुइ अमरु ।
सत्थु हुंतु सो जाणइ सत्थ पसत्थ सहि
कहि अणुवमु[175] उवमिज्जइ केण समाणु सहि !?॥ ४३ ॥

[ तस्य पदपङ्कजं पुण्यैः प्राप्य जनभ्रमरः
शुद्धज्ञान-मधुपानं कुर्वन् भवत्यमरः ।
स्वस्थो भवन् स जानाति शास्त्राणि प्रशस्तानि सर्वाणि
कथयानुपम उपमीयते केन सह सखे ! ? ॥ ४३ ॥ ]

(१) इह-परलोकानामकस्मादाजीव-मरणमश्लोकः ।

१७१ क. वेत्यात्मा यः । १७२ क. स्फुटं यः । १७३ क. °पंकउ । १७४ ख. ग. कुणंतउ । १७५ ख. ग. यणु° ।

तस्य पदपङ्कजं पुण्यैः प्राप्य जन एव भ्रमरः शुद्धज्ञानमधुपानं कुर्वन् भवत्यमरः । शुद्धज्ञानपाने हि सति स्वस्थो विषयकषायाद्यभावेन सुखितः सन् स जानाति शास्त्राण्यङ्गोपाङ्गप्रकरणादीनि प्रशस्तानि शुभानि सहीति सर्वाण्यपि । एवंविधश्चानुपमः केन सहोपमीयते इति सखे ! कथय त्वमेवोपमाऽतिक्रान्तत्वान्न केनापीत्यर्थः ॥ ४३ ॥

अथ तस्यैव गुरुक्रममाह—

वद्धमाणसूरिसीसु जिणेसरसूरिवरु
तासु सीसु जिणचंदजईसरु जुगपवरु ।
अभयदेउमुणिनाहु[176] नवंगह वित्तिकरु
तसु पयपंकय–भसलु सलक्खणुचरणकरु ॥ ४४ ॥

[ वर्धमानसूरिशिष्यो जिनेश्वरसूरिवरः
तस्य शिष्यो जिनचन्द्रयतीश्वरो युगप्रवरः ।
अभयदेवमुनिनाथो नवाङ्गानां वृत्तिकरः
तस्य पदपङ्कजभ्रमरः सलक्षणचरणकरः ॥ ४४ ॥ ]

वर्धमानसूरेः शिष्यो जिनेश्वरसूरिर्वरः । तस्य जिनेश्वरसूरेः शिष्यो जिनचन्द्रसूरिर्यतीश्वरो युगप्रवरः, अभयदेवमुनिनाथोऽपि स्थानादिनवाङ्गवृत्तिकारकः । तस्याभयदेवसूरेः पदपङ्कजभ्रमरः सामुद्रिकोक्तलक्षणयुक्तचरणकर इत्यर्थः ॥ ४४ ॥

सिरिजिणवल्लहु दुल्लहु निप्पुन्नहं जणहं
हउं न अंतु परियाणउं अहु जण ! तग्गुणह ।
सुद्धधम्मि हउं ठाविउ जुगपवरागमिण
एउ वि मइं परियाणिउ[177] तग्गुण–संकमिण ॥ ४५ ॥

[ श्रीजिनवल्लभो दुर्लभो निष्पुण्यानां जनानाम्
अहं नान्तं परिजानाम्यहो ! जनास्तद्गुणानाम् ।
शुद्धधर्मेऽहं स्थापितो युगप्रवरागमेन
एतदपि मया परिज्ञातं तद्गुणसङ्क्रमेण ॥ ४५ ॥ ]

तच्छिष्यः श्रीजिनवल्लभो दुर्लभो निष्पुण्यानां जनानाम् । तस्यैवंविधस्य गुणरत्नानां महानिधेरहं नैवान्तं पर्यन्तं सर्वसङ्ख्यामित्यर्थः परिजानामि भो जनास्तद्गुणानाम् । किञ्च शुद्धधर्मे विधिधर्मरूपे परमार्थतोऽहं तेन स्थापितः

---

१७६ ख. ग. अभयदेवउ । १७७ क. °याणउ ।

स्वप्रतिपादितविधौ प्रवर्त्तनात् । एतदपि मया विधिमार्गे प्रवर्तनं परिज्ञातं तद्गुण-सङ्क्रमेण दूरस्थस्यापि तस्यादर्शस्येव कथञ्चित्प्रभावातिशयेन मयि तद्गुणसङ्क्र-मात् । विधिधर्मविषयबहुमानातिशयप्रादुर्भावादित्यर्थः ॥ ४५ ॥

अथ स्तुतिपरिसमाप्तौ स्वचरितेन ताम्यन् सविषादमाह–

**भामिउ भूरिभवसायरि[178] तह वि[179] न पत्तु मंइं[180]**
**सुगुरुरयणु जिणवल्लहु दुल्लहु सुद्धमइ ।**
**पाविय तेण न निव्वुइ इह पारत्तियइं[181]**
**परिभव पत्त बहुत्त[182] न हुय पारत्तियइं[183] ॥ ४६ ॥**

[ भ्रान्तो भूरिभवसागरे तथापि न प्राप्तो मया
सुगुरुरत्नं जिनवल्लभो दुर्लभः शुद्धमतिः ।
प्राप्ता तेन न निर्वृतिरिहपारत्रिकी
परिभवाः प्राप्ताः प्रभूता न भूतानि पारात्रिकाणि ॥ ४६ ॥

भ्रान्तो भूरि प्रभूतकालं भवसागरे तथापि न प्राप्तो मया सुगुरुरत्नं श्री-जिनवल्लभो दुर्लभोऽपुण्यानां शुद्धमतिर्विवेकातिशयवत्त्वात् । प्राप्ता तेन कारणेन नैव निर्वृतिः सुखविशेषो मुक्तिर्वा । तदेवाह–इहेति ऐहिकी पारात्रिकी च जन्मा-न्तरसम्बन्धिनी । परिभवाश्च बहवः प्राप्ताः, न च भूताः कुतोऽपि[183] परित्राः परि-त्राणानि, अथवा न भूतानि पारात्रिकाणि परत्र हितानि ज्ञानादीनि युगप्रवरागमप्र-सादाभावादित्यर्थः ॥ ४६ ॥

अथोपसंहरन्नाह––

**इय जुगपवरह सूरिहि सिरिजिणवल्लहह**
**नायसमयपरमत्थह बहुजणदुल्लहह ।**
**तसु गुणथुइ बहुमाणिण[184] सिरिजिणदत्तगुरु**
**करइ सु निरुवमु पावइ पउ जिणदत्तगुरु ॥ ४७ ॥**

[ इति युगप्रवरस्य सूरेः श्रीजिनवल्लभस्य
ज्ञातसमयपरमार्थस्य बहुजनदुर्लभस्य ।
तस्य गुणस्तुतिं बहुमानेन श्रीजिनदत्तगुरुः
करोति स निरुपमं प्राप्नोति पदं जिनदत्तगुरु ॥ ४७ ॥ ]

इति युगप्रवरस्य सूरेः श्रीजिनवल्लभस्य ज्ञातसिद्धान्तपरमार्थस्य बहुजनानां गुरुकर्मणां दुर्लभस्य तस्य गुणस्तुतिं बहुमानेन श्रीजिनदत्तगुरुः करोति । स

१७८ ख. ग. °सायरु । १७९ क. नु । १८० क. मइं । १८१ ख. ग. °यइं । १८२ ख.ग. बहुत्त। १८३ ख. ग. °पि परित्रा णानि । १८४ क. °मानामिमां ।

च कर्ता निरुपमं पदं मोक्षलक्षणं प्राप्नोति प्रभावातिशयख्यापनाय भविष्यत्यप्यर्थे वर्तमानानिर्देशः। जिनैर्दत्तं सिद्धान्ते दर्शितं गुरु महत् पूज्यं मोक्षाख्यमित्यर्थः ॥ ४७ ॥

इति युगप्रवरागमजिनपतिसूरिशिष्यलेशविरचितं चर्चरीसंक्षेपविवरणं समाप्तम् ॥

इति चर्चरीसुचर्चामञ्जर्या सुरभिरूपता लेभे ।
**जिनपाल**मूलनाम्ना श्री**जिनपति**मुनिपशिष्येण ॥१ ॥
**वेद–ग्रह–रवि**वर्षे मधुपक्षे श्यामले तृतीयायाम् ।
सा सफला संजज्ञे मुनिजनमधुपोपभोगेन ॥ २ ॥
श्री**जिनेश्वर**सूरीणामादेशात् कविकुम्भिनाम् ।
इयं व्याख्या मया चक्रे संक्षिप्ता मन्दमेधसा ॥ ३ ॥

**इति [188]चर्चरी समाप्ता ।**

---

१८५ ख. ग. °शयस्य ख्या°। १८६ ख. ग. °मानानि°। १८७ ख. ग. इति श्रीजिनपत्ति° । १८८ क. चचरी° ।

( २ )

## जिनदत्तसूरिविरचितो

### जिनपालोपाध्यायविहितवृत्तियुत

# उपदेश( धर्म )रसायनरासः ।

वीरं जिनपतिं नौमि यद्वचो मधुरं बुधाः ।
रसायनमिवास्वाद्य बभूवुरजरामराः ॥ १ ॥
चर्च्चरी[1]-रासकप्रख्ये प्रवन्धे प्राकृते किल ।
वृत्तिप्रवृत्तिं नाधत्ते प्रायः कोऽपि विचक्षणः ॥ २ ॥
किन्तु क्वचित् क्वचित् किञ्चिदुपदेशरसायने ।
पदं दुर्बोधमित्येष न्याय्यो व्याख्यापरिश्रमः ॥ ३ ॥
अत्र[2] पद्धटिकाबन्धे मात्राः षोडश पादगाः ।
अयं सर्वेषु रागेषु गीयते गीतिकोविदैः ॥ ४ ॥

इह हि युगप्रधानागमैः श्रीमद्भिर्जिनदत्तसूरिभिर्लोकप्रवाहपतितान् बहून् जन्तूनुपलभ्य तदुपचिकीर्षया लोकप्रवाह-सद्गुरुस्वरूप-चैत्यविधिविशेष[3]-श्रावक-श्राविकादिशिक्षाविशेषप्रतिपादकः प्राकृतभाषया धर्मरसायनाख्यो रासकश्चक्रे । स च मन्दबुद्धिनाऽपि मया किञ्चिद् व्याख्यायते । तस्येदमादिसूत्रम्—

पणमह पास-वीरजिण भाविण
तुम्हि सव्वि जिव मुच्चहु पाविण ।
घरववहारि म लग्गा अच्छह[4]
खणि खणि आउ गलंतउ पिच्छह[5] ॥ १ ॥

[ प्रणमत पार्श्व-वीरजिनौ भावेन
यूयं सर्वे जीवा मुच्यध्वं पापेन ।
गृहव्यवहारे मा लग्नास्तिष्ठथ
क्षणे क्षणे आयुर्गलत् प्रेक्षध्वम् ॥ १ ॥ ]

प्रणमत नमस्कुरुत भो भव्याः ! पार्श्व-वीरावुपान्त्यान्त्यरूपौ जिनौ तीर्थकरौ भावेन शुभाध्यवसायेन 'तुम्हि त्ति' यूयं सर्वे समस्ता अपि । अथ तत्प्रणामफल-माह-यथा यूयं पापेन कल्मषेण मुच्यध्वं त्यक्ता भवथ । इष्टदेवतास्तवमभिधायाथ

---

१ ख. चचरी° । २ क. अथ । ३ क. °विशेषश्राविका° । ४ क. अच्छहु । ५ क. पिच्छउ ।

**धर्मोपदेशमारभते सूत्रकारः । गृहव्यवहारे गृहव्यापार एव हलकर्षण-सेवा-वाणिज्यादावेव मा लग्ना आसक्तास्तिष्ठथ । अन्तराऽन्तरा धर्मव्यवहारमपि कुरुतेत्यवधारणफलम् । क्षणे क्षणे आयुर्जीवितं गलद् भ्रश्यत् प्रेक्षध्वम् । प्रायः पर्यायाकथनं सर्वत्र सूत्रपदानां प्रसिद्धत्वादित्यर्थः ।। १ ।।**

**तथा च किमित्याह—**

**लद्धउ माणुंसजम्मु म हारहु**
**अप्पा भव-समुद्दि गउ तारहु ।**
**अप्पु म अप्पंहु रायह रोसह**
**करहु निहाणु मं सव्वह दोसह ।। २ ।।**

[ लब्धं मानुषजन्म मा हारयत
आत्मानं भवसमुद्रगतं तारयत ।
आत्मानं माऽर्पयत राग-रोषयोः
कुरुत निधानं मा सर्वदोषाणाम् ।। २ ।। ]

**लब्धं मानुषजन्म मा हारयत मा निरर्थकं नयत । आत्मा भवसमुद्रगत-स्तार्यतां तत्पारं नीयताम् । तदुपायमाह-आत्मानं मा अर्पयत तद्वशं मा नयत राग-द्वेषयोः । तद्वशवर्तित्वेन मा कुरुत निधानं सर्वदोषाणामित्यर्थः ।। २ ।।**

**दुलहउ मणुयजम्मु जो पत्तउ**
**सहलउ करहु तुम्हि सुनिरुत्तउ ।**
**सुहगुरु-दंसण विणु सो सहलउ**
**होइ न कीवइ वहलउ वहलउ ।। ३ ।।**

[ दुर्लभं मनुजजन्म यत् प्राप्तं
सफलं कुरुत यूयं सुनिरुक्तम् ।
शुभगुरुदर्शनं विना तत् सफलं
भवति न कथमपि शीघ्रं शीघ्रम् ।। ३ ।। ]

**दुर्लभं मनुजजन्म यत् प्राप्तं सफलं कुरुत तद् यूयं सुनिरुक्तं सुनिश्चितम् । शुभगुरुदर्शनं च विना न तत् सफलं भवति कथमपि । तथा 'वहलउ वहलउ' इति लोके हि यत्र विवाहादौ प्रमुदितजनसमूहः सवेषाभरणः परस्परप्रीत्या क्रीडति तद् वहलवहलम् । जन्मन्यपि यत्र पुत्र-कलत्र-राजसन्मान-लक्ष्मीवत्त्वं लोक-लोकोत्तरविशिष्टचेष्टावत्त्वं च तद् वहलवहलमित्यर्थः ।। ३ ।।**

---

१ क. माणस° । २ ख. ग. अप्पह । ३ क. म म । ४ ख. ग. °षं जन्म । ५ क. आत्मानं । ६ क.° गतं तारयत आत्मानं मोक्षं प्रापयतेत्यर्थः । तथा आ० ।

अथ सुगुरोः स्वरूपमाह

सुगुरु सु वुच्चइ सच्चउ भासइ
परपरिवायि-नियरु जसु नासइ ।
सव्वि जीव जिवं अप्पउं रक्खइ
मुक्ख-मग्गु पुच्छियउ जुं अक्खइ ॥ ४ ॥

[ सुगुरुः स उच्यते सत्यं भाषते
परपरिवादिनिकरो यस्माद् नश्यति ।
सर्वजीवानात्मानमिव रक्षति
मोक्षमार्गं पृष्टो य आख्याति ॥ ४ ॥ ]

सुगुरुः स उच्यते यः सत्यमनुत्सूत्रं भाषते । परपरिवादिनिकरो यस्माद् भयेन नश्यति । अत्र विभक्तिव्यत्ययः प्राकृतत्वादेवमन्यत्रापि । सर्वजीवानात्मानमिव रक्षति । मोक्षमार्गं ज्ञानादिकं पृष्टः सन् य आचष्ट इत्यर्थः ॥ ४ ॥

जो जिण-वयणु जहट्ठिउ जाणइ
दव्वु खित्तु कालु वि परियाणइ ।
जो उस्सग्गववाय वि कारइ
उम्मग्गिण जणु जंतउ वारइं ॥ ५ ॥

[ यो जिनवचनं यथास्थितं जानाति
द्रव्य-क्षेत्र-कालानपि परिजानाति ।
य उत्सर्गापवादावपि कारयति
उन्मार्गेण जनं यान्तं वारयति ॥ ५ ॥ ]

यो जिनवचनं यथास्थितं जानाति । द्रव्य-क्षेत्र-कालान् संयमनिर्वाहानिर्वाहहेतूनपि परिजानाति । य उत्सर्गापवादावपि तत्तत्कालापेक्षया शिष्यादिभिः कारयति । उन्मार्गेण लोकप्रवाहेण जनं यान्तं वारयतीत्यर्थः ॥ ५ ॥

अथैतत्प्रसङ्गेनैव लोकप्रवाहसरितो द्रव्यसरितश्च श्लिष्टं स्वरूपमाह—

इह विसमी गुरुगिरिहिं समुट्ठिय
लोयपवाह--सरिय कुपइट्ठिय ।
जसु गुरुपोउ नत्थि सो निज्जइ
तसु पवाहि पडियउ परिखिज्जइ ॥ ६ ॥

१ क. जिंव । २ ख. ग. अप्पउं । ३ क. °मग्ग । ४ ख. ग.जु । ५ क. वारउ । ६ ख. ग. यथावस्थितं । ७ ख. ग. तत्का° । ८ क. अथ तत्प्र° । ९ क. विससी स गु° ।

[ इह विषमा गुरुगिरः समुत्थिता
लोकप्रवाहसरित् कुप्रतिष्ठिता ।
यस्य गुरुपोतो नास्ति स नीयते
तस्याः प्रवाहे पतितः परिखिद्यते ॥ ६ ॥ ]

इह प्रवचने विषमा महानर्थहेतुरपि भवाभिनन्दिजनाभिरुचिततया विपर्यस्तरूपा गुरुगिरः कुगुरुवचनात् समुत्थिता, सिद्धान्तानुक्तमपि सामान्यपञ्चजनानुमतं प्रमाणमिति लोकप्रवाहः स एवानुस्रोतोगमनप्रधानत्वात् सरित् कुप्रतिष्ठिता कुत्सिततया ख्यातिं गता । तयां च यस्य गुरुपोतः सद्गुरुप्रवहणं नास्ति स नीयते उह्यते । तस्याः प्रवाहे पूरे पतितः परिखिद्यते । द्रव्यसरित् पुनर्गुरुगिरेः महापर्वतात्, कौ पृथिव्यां प्रतिष्ठिता, गुरुपोतो महत्प्रवहणं, प्रवाहः पूर इत्यर्थः ॥६॥

**सा घणजडपरिपूरिय दुत्तर**
**किव तरंति जे हुंति निरुत्तर ?।**
**विरला [2]किवि तरंति जि सदुत्तर[3]**
**ते लहंति सुक्खंइ[4] उत्तरुत्तर ॥ ७ ॥**

[ सा घनजडपरिपूरिता दुस्तरा
कथं तरन्ति ये भवन्ति निरुत्तराः ? ।
विरलाः केचित् तरन्ति ये सदुत्तराः
ते लभन्ते सौख्यान्युत्तरोत्तराणि ॥ ७ ॥ ]

सा लोकप्रवाहसरिद् घनजडपरिपूरिता प्रभूतमूर्खप्रायजनाकीर्ण्णा दुस्तरा कृच्छ्रप्राप्यपर्यन्ता ता कथं तरन्ति तत्पर्यन्तं प्राप्नुवन्ति ? ये भवन्ति निरुत्तरा विचाराचातुर्येण विशिष्टोत्तरविकलाः । विरलाः केचित् तरन्ति ये सदुत्तराः सुगुरुसम्पर्कादिना विशिष्टोत्तरदानसमर्थाः । ते लभन्ते सौख्यानि उत्तरोत्तराणि प्रधानप्रधानतराणि स्वर्गापवर्गादिलाभेन । द्रव्यसरित्पक्षे तु जडानि जलानि । निरुत्तरास्तथाविधोत्तरणशक्तिवैकल्येन सर्वथोत्तरणासमर्थाः । सदुत्तराः शोभनोत्तरणशक्तिमन्तः । उत्तरोत्तराणि बन्धुसङ्गम–लक्ष्मी–सम्भोगजनितानीत्यर्थः ॥ ७ ॥

तदुत्तरणाय च गुरुप्रवहणं दुर्लभमित्याह—

**गुरु–पवहणु निप्पुन्नि न लब्भइ**
**तिणि पवाहि जणु पाडियउ वुब्भइ ।**
**सा संसार–समुद्दि पइट्ठी**
**जहिं[5] सुक्खह वत्ता वि पणट्ठी ॥ ८ ॥**

१ ग. तथा । २ क. किंचि । ३ ख. ग. सुदुत्तर । ४ ख. ग. सुक्खइं । ५ क. जहिं ।

[ गुरु–प्रवहणं निष्पुण्यैर्न लभ्यते
तस्मिन् प्रवाहे पतितो जन उह्यते ।
सा संसार–समुद्रे प्रविष्टा
यत्र सौख्यानां वार्ताऽपि प्रणष्टा ॥ ८ ॥ ]

गुरुप्रवहणं सदाचार्यपोतो निष्पुण्यैर्न लभ्यते । तथा च तस्मिन् लोकप्रवाहे पतितो जन उह्यते । सा सरित् संसारसमुद्रे प्रविष्टा तद्गामिनी यातेत्यर्थः । यत्र सौख्यानां वार्ताऽपि प्रणष्टा । द्रव्यसरित्पक्षे तु गुरुप्रवहणं महापोत इत्यर्थः ॥ ८ ॥

**तहिं गय जण कुग्गाहिहिं खज्जहिं**
**मयर–गरुयदाढग्गिहि भिज्जहिं ।**
**अप्पु न मुणहि न परु परियाणहिं**
**सुखलच्छि सुमिणे वि न माणहिं ॥ ९ ॥**

[ तत्र गता जनाः कुग्राहैः खाद्यन्ते
मद(क)र–गुरुदंष्ट्राग्रैर्भिद्यन्ते ।
आत्मानं न जानन्ति न परं परिजानन्ति
सुखलक्ष्मीं स्वप्नेऽपि न मानयन्ति ॥ ९ ॥ ]

तत्र लोकप्रवाहसरिति प्राप्ता जनाः कुग्राहैः कदभिनिवेशैः खाद्यन्ते आत्मायत्ताः क्रियन्ते । कुत इदं यतो मदमहङ्कारं रान्ति स्व–परेभ्यो वितरन्ति मदराः कुगुरवस्तेषां गुरुदंष्ट्राग्रैस्तत्तुल्यकठोरोत्सूत्रवचनैर्भिद्यन्ते वासितहृदयाः क्रियन्ते । तथा चात्मानं दुस्सहसंसारदुःखपतितं परं च कुगुरुं केवलं वञ्चनाप्रवृत्तं न परिजानन्ति । सौख्यलक्ष्मीं स्वर्गादिकां स्वप्नेऽप्यास्तां साक्षान्न मानयन्ति नैवोपभुञ्जते । पक्षान्तरे तु कुग्राहाः कुत्सितजलचरविशेषाः, मकरा अपि प्रसिद्धास्तैर्भिद्यन्ते विदार्यन्ते । तथा च तदवस्था नात्मानं परं वा विदन्ति । मूर्छितत्वेनात्यन्तमूढत्वात् सौख्यलक्ष्मीं स्वजनसम्बन्धसम्भोगादिकामित्यर्थः ॥ ९ ॥

अथ तद्विषयं कस्यापि सत्पुरुषस्य चेष्टितमाह–

**गुरु–पवहणु जइ किर कु वि याणइ**
**परउवयाररसिय मङ्गाणइ ।**
**ता गयचेयण ते[६] जण पिच्छइ**
**किंचि सजीउ सो वि तं निच्छइ ॥ १० ॥**

---

१ ख. ग. यस्यां । २ ग.° गुरुय° । ३ ख. ग. °हिं । ४ क. भज्जहिं । ५ ख. ग. केवलं° ६ क. जे ।

[ गुरु–प्रवहणं यदि किल कोऽप्यानयति
परोपकाररसिकोऽनिच्छया बलात्कारेण ।
तावद् गतचेतनान् तान् जनान् प्रेक्षते
किञ्चित् सजीवः सोऽपि तं नेच्छति ॥ १० ॥ ]

गुरुप्रवहणं यदि कश्चिद् दयालुस्तदुत्तितारयिषया तत्समीपमानयति किल कोऽपि परोपकाररसिकः सत्पुरुषो 'मड्डाण' इति तदनिच्छया बलात्कारेण। तावदसौ गतचेतनान् नष्टविवेकलोचनान् तान् जनान् प्रेक्षते बहून् कोऽपि। अत्र लिङ्गव्यत्ययः प्राकृतत्वादेवमन्यत्रापि। तेषु सजीवश्चेतनावान् सोऽपि तं गुरुप्रवहणं नेच्छत्यारोढुम्। पक्षान्तरे तु अर्थान्तरं प्रसिद्धमेवेत्यर्थः ॥ १० ॥

**कट्ठिण कु वि जइ आरोविज्जइ**
**तु वि तिण नीसत्तिण रोविज्जइ।**
**कच्छ जं दिज्जइ किर रोवंतह**
**सा असुइहि भरियइ पिच्छंतह ॥ ११ ॥**

[ कष्टेन कोऽपि यदि आरोप्यते
तथापि तेन निःसत्त्वेन रुद्यते।
कच्छा या दीयते किल रुदतः
साऽशुच्या भ्रियते प्रेक्षमाणस्य ॥ ११ ॥ ]

परोपकाररसिकेन च कष्टेनारोचमानतया कृच्छ्रेण कोऽपि मूर्छितो यद्यारोप्यते पोते। तथापि तेन आरोप्यमाणेन निःसत्त्वेनाधीरशिरोमणिना कर्त्रा अथवा तेन प्रसिद्धेन निःसत्त्वेन करणेन रुद्यते। युक्तं चैतत् यतः कच्छा या दीयते अरोचमानकच्छाबन्धस्यात एव रुदतः। सा अशुच्या विष्टया भ्रियते लिप्यते प्रेक्षमाणस्य कच्छादातुः। अतो युक्तमेव यदारोप्यमाणो रोदितीत्यर्थः ॥ ११ ॥

अथ मूर्छितेष्वेव मध्यादुपकाररसिकेन नरेण दीयमानं वितरणव्यतिक[रं] तस्य च गुरुकर्मत्वेन शक्तिवैकल्यतोऽकरणेन फलाभावप्रतिपादनं च श्लेषेणाह—

**धम्मु सु धरणु कु सक्कइ कायरु ?**
**तहिं गुणु कवणु चडावइ सायरु ? ।**
**तसु सुहत्थु निव्वाणु किं संधइ ?**
**मुक्ख किं करइ राह किं सु विंधइ ? ॥ १२ ॥**

---

१ क. अर्थांतरप्र° । २ ख. ग. य । ३ ख. ग. यतो । ४ क. °केन धर्मदानव्यतिकररुले° । ५ ख. ग. °मुक्खु । ६ ख. ग. राहु ।

[ धर्मं स धर्तुं किं शक्नोति कातरः ?
तत्र गुणं क आरोपयति सादरम् ? ।
तस्य सुखार्थं (सुहस्तो) निर्वाणं किं सन्धत्ते ?
मोक्षं किं करोति राधां किं स विध्यति ? ॥ १२ ॥ ]

धर्मं शुभानुष्ठानं स कातरपुरुषो धर्तुमात्मनि निवेशयितुं किं शक्नोति ? नैव । तत्र कातरगृहीते धर्म्मे गुणमुत्तरोत्तरवृद्धिलक्षणं क आरोपयति सादरम् ? आरोपयितुः कातरत्वात् । तस्य कातरस्य सुखार्थं निर्वाणमुपचारान्निर्वाणहेत्वनुष्ठानं किं कृपालुरपि सन्धत्ते चेतसि निवेशयति ? नैव । तथा चासौ कृपणः किं मोक्षं कृत्स्नकर्मक्षयलक्षणं करोत्यात्मायत्तं विधत्ते ? नैव । यतोऽसौ राधां सम्यक्चारित्रानुपालनरूपां किं स कातरो विध्यति ? नैव । अयमत्र भावो यो हि कातरो धर्म्मं तत्र गुणं चारोपयितुमसमर्थश्चारित्रानुपालनं च न करोति; स किं मोक्षं कदाचित् साधयति ? नैव । अर्थान्तरपक्षे तु धर्म्मं धनुः, गुणो जीवा, तस्य कातरस्य, सुहस्तः शोभनकरः, निश्चितं बाणं निर्वाणं, मोक्षं प्रक्षेपं, राधां चक्राष्टकोपरि वर्तमानां पाञ्चालिकामित्यर्थः ॥ १२ ॥

कातरवदस्थिरोऽप्ययोग्य इत्याह–

**तसु किंव होइ सुनिव्वुइ-संगमु ?**
**अथिरु जुं जिवं किक्काणु तुरंगमु ।**
**कुप्पहि पडइ न मग्गि विलग्गइ**
**वायह भरिउ जहिच्छइं वग्गइ ॥ १३ ॥**

[ तस्य कथं भवति सुनिर्वृति–सङ्गमः
अस्थिरो यो यथा किक्काणतुरङ्गमः ।
कुपथे पतति न मार्गे विलगति
वातेन भृतो यथेच्छं वल्गति ॥ १३ ॥ ]

तस्य कथं भवति निर्वृतिसङ्गमो योऽस्थिरो मनश्चक्षुरादिचपलः किक्काणतुरङ्गम इव । स हि कायेनैव चपलः, परमस्थिरत्वेन साम्यादुपमानम् । कुपथे लोकप्रवाहलक्षण उन्मार्गे पतति न मार्गे सम्यग्ज्ञानादिरूपे [10]विलगति न सम्बध्यते । वातेन विद्याजनिताहङ्कारोत्कर्षेण भृतो यथेच्छं वल्गति निरर्थकं चेष्टते । किक्काणोऽपि निर्वृतिः सुखमात्रां चणकादिभृतोदरत्वेन प्रबलप्रभञ्जनो वातभृत इत्यर्थः वल्गति उट्टीकैत इत्यर्थः ॥ १३ ॥

१ ख. ग. आरोहयति । २ क. °यितुं । ३ ख. ग. वारो° । ४ ग. च करोति । ५ क. किंव । ६ ख. सुमिक्कइ । ७ ख. ग. ज्जु । ८ क जिंत्र । ९ ख. ग. °च्छइं । १० क. विगलति ।११ क. °मात्रं । १२ क. ° कति ।

**खज्जइ सावएहि सुबहुत्तिहिं**
**भिज्जइ सामएहिं गुरुगत्तिहिं ।**
**वग्घसंघं-भय पडइ सु खड्डह**
**पडियउ होइ सु कूडउ हड्डह ॥ १४ ॥**

[ खाद्यते श्रावकैः सुबहुभि–
भिद्यते सामदैः ( श्वापदैः ) गुरुगात्रैः ।
व्याघ्रसङ्घभयात् पतति स गर्ते
पतितो भवति स कूटोऽस्थ्नाम् ॥ १४ ॥ ]

कुपथपतितः सन् असावस्थिरः खाद्यते वस्त्रान्नादिग्रहणेनोपभुज्यते श्रावकैः प्रवाहपतितसाध्वनुयायिभिः सुबहुभिः भिद्यते वासितहृदयः क्रियते सामदैः साम ददतीति कोमलपापोपदेशदातृभिर्गुरुगात्रैर्गुरुरिति गात्रं स्वरूपं येषां नामाचार्यस्वरूपैः सांसारिकमहाभयोत्पादकत्वाद् व्याघ्र इव व्याघ्रः सङ्घो निर्गुणदुष्टबहुजनसमूहस्तस्माद् भयं सन्मार्गाप्रवर्तने त्रासस्तेन पतत्यसौ गर्ते नरके उपचारात् । तन्निमित्तनिरन्तरानायतनसेवादौ पतितश्च सन् कूटो राशिर्भवति अस्थ्नां निर्गुणत्वात् कीकसमात्रावशेषो भवति । अर्थान्तरपक्षे तु श्वापदैः श्व-शृगालादिभिः भिद्यते विदार्यते । सामजैर्वनगजैः गुरुगात्रैर्बृहच्छरीरैः व्याघ्रसङ्घाश्चित्रकसमूहः पतितश्च सन् मृतत्वात् कूटो राशिरस्थ्नां भवतीत्यर्थः ॥ १४ ॥

**तेण जम्मु इहु नियउ निरत्थउ**
**नियमत्थइ देविणु पुल्हत्थउ ।**
**जइ किर तिण कुलि जम्मु वि पाविउ**
**जाइजुत्तु तु वि गुण न सु दाविउ ॥ १५ ॥**

[ तेन जन्मेह नीतं निरर्थकं
निजमस्तके दत्त्वा पुल्हत्थकम् ।
यदि किल तेन कुले जन्मापि प्राप्तं
जातियुक्तं तथापि गुणो न स दापितः ॥ १५ ॥ ]

तेन कातरेणास्थिरेण वा जन्मात्र निरर्थकं नीतं निजमस्तके दत्त्वा पुल्हत्थकं 'अन्तःशुषिरमिलितकरद्वयप्रहारः पुल्हत्थकः' यथा केनापि बलवताऽत्यन्तान्यायपरेण वण्ठेन कस्यचिद् दुर्गतनरादेः पार्श्वान्मस्तके पुल्हत्थकं दत्त्वा तस्माल्लक्ष्म्यादि सर्वथाऽपहृत्य तस्य जन्म निरर्थकं क्रियते । एवमनेनापि कातरादिना

१ क. °सिंघ° । २ क.° गें प्रवर्त्तने त्रासत्येन । ३ ख. मृतसत्कूटो, ग. सन् कूटो । ४ क. पुल्लत्थको ।

सद्धर्म्मप्रवृत्त्यादिविकलेन परमार्थतः स्वमस्तके[1] पुलहत्थकं दत्त्वा जन्म व्यर्थीक्रियते । यदि किल तेन कातरादिना कुले जन्मापि प्राप्तं जातियुक्तं तथापि गुण उपकारः सद्धर्मलाभादिकः स इति लोकोत्तरो न दापितः दत्तो दर्शितो वेत्यर्थः ॥ १५ ॥

जइ किर वरिससयाउ वि होई[2]
पाउ इक्कु परिसंचइ सोई[3] ।
कह वि सो वि जिणदिक्ख पवज्जइ
तह वि न सावज्जई[4] परिवज्जइ ॥ १६ ॥

[ यदि किल वर्षशतायुरपि भवति
पापमेकं परिसंचिनोति सोऽपि ।
कथमपि सोऽपि जिनदीक्षां प्रपद्यते
तथापि न सावद्यानि परिवर्जयति ॥ १६ ॥ ]

यदि किल वर्षशतायुर्भवति तथापि पापमेवैकं परिसंचिनोति । सोऽपि कातरादिः कथमपि सद्गुरुसम्पर्कादिना जिनदीक्षां प्रतिपद्यते । तथापि भावविकलत्वान्न सावद्यानि परित्यजतीत्यर्थः ॥ १६ ॥

गज्जइ मुद्धह लोअह अग्गइ
लक्खण तक्क वियारण लग्गइ ।
भणइ जिणागमु सहु वक्खाणउं
तं पि वियारमि[6] जं लुक्काणउं ॥ १७ ॥

[ गर्जति मुग्धानां लोकानामग्रे
लक्षण—तर्कविचारणे लगति ।
भणति जिनागमं सर्वं व्याख्यामि
तम(द)पि विचारयामि यल्लौकिकम् ॥ १७ ॥ ]

गर्जति मुग्धलोकानां पुरतो बृहत्स्वरेण साहङ्कारं स्वगुणोत्कीर्तनं गर्जनं लक्षण—तर्कावश्रुतावपि विचारयितुं प्रवर्तते । अहङ्काराद् भणति च जिनागमं सर्वं व्याख्यामि । अहं तमपि विचारयामि यल्लौकिकं श्रुति--स्मृति—पुराणादिकं शास्त्रमित्यर्थः ॥ १७ ॥

---

१ क. °मस्तकं दत्त्वा । २ ख. ग. °इ । ३ क. सोइ । ४ ख. ग. °ज्जइं । ५ ख. ग. पर सं° । ६ ख. ग. °रिमि ।

**अद्धमास चउमासह पारइ**
**मलु[1] अब्भिंतरु[2] बाहिरि धारइ ।**
**कहइ उस्सुत्त-उम्मग्गपयाइं[3]**
**पडिक्कमणय[4]-वंदणयगयाइं ॥ १८ ॥**

[ अर्धमास-चतुर्मासादिभिः पारयति
मलमाभ्यन्तरं बहिर्धारयति ।
कथयति उत्सूत्रोन्मार्गपदानि
प्रतिक्रमणक-वन्दनकगतानि ॥ १८ ॥ ]

**अर्द्धमास—चतुर्मासादिभिः पारयति । मलमाभ्यन्तरं चित्तकालुष्यलक्षणामिव बहिः शरीरे धारयतीत्युत्प्रेक्षा । कथयति लोकेभ्य उत्सूत्रोन्मार्गपदानि प्रतिक्रमणक—वन्दनकगतानि । तथाहि प्रतिक्रमणं न कर्तव्यमेव श्रावकैः, साध्वादिभिरपि क्षेत्रदेवतादिकायोत्सर्गः[5] प्रतिक्रमणे न कार्यः । पर्यन्ते च स्तुतित्रयानन्तरं[6] शक्रस्तवपाठोऽप्ययुक्त इत्यादीनि । ऊर्ध्वस्थिता एव च साध्व्यो द्वादशावर्तवन्दनं ददतीत्यादीनीत्यर्थः ॥ १८ ॥**

**परं[7] न मुणइ तयत्थु जो अच्छइ**
**लोयपवाहि पडिउ सु वि गच्छइ ।**
**जइ गीयत्थु[8] को वि तं वारइ**
**ता तं उट्ठिवि[9] लउडइ मारइ ॥ १९ ॥**

[ परं न जानाति तदर्थो य आस्ते
लोकप्रवाहे पतितः सोऽपि गच्छति ।
यदि गीतार्थः कोऽपि तं वारयति
तदा तमुत्थाय लगुडेन मारयति ॥ १९ ॥ ]

**परं न जानाति तदर्थः प्रतिक्रमणादिविधिसूत्रार्थः "समणेण(१) सावएण य" इत्याद्यनुयोगद्वारोक्तो यस्तिष्ठति । तत्र हि वस्त्रोर्ध्वे[10] कायोर्द्ध्वे च प्रत्युपेक्षा कर्तव्येति पाठे दशिकापर्यन्ते वस्त्रं गृहीत्वा ऊर्ध्वस्थितैश्च प्रत्युपेक्षा[11] क्रियते इत्यज्ञानाद् व्याचक्षते । तत्र चोक्तं गीतार्थैः—**

**"वत्थे(२) काउड्ढम्मी परवयणठि ( वि )उ गहाय दसियंते ।**

(१) श्रमणेन श्रावकेन च । (२) वस्त्रे कायोर्ध्वे परवचनस्थितो ( विद् ) गृहीत्वा दशिकान्ते ।

१ क. मल । २ क.° तरू । ३ ख. ग. उमग्ग । ४ ख. ग. पडिकम° । ५ क.° देवताका° । ६ क.° रं स्त°, ख.° रं शक्रस्तवस्तव° । ७ ग. परं । ८ ख. ग. गीयत्थ । ९ क. उट्ठवि । १० क. वस्त्रोर्द्धे च । ११ ख. ग. क्षा या क्रि° ।

तं न भवइ उक्कुडुओ तिरियं पेहे जह विलत्तो ॥

अत्र हि वंस्त्रोर्ध्व तिर्यगिति कायोर्ध्वे चोत्कटिकासनस्थ इत्यर्थो वर्तते। तमबुद्ध्वा साध्वीनामूर्ध्वस्थितानामेव वन्दनं दापयन्ति । एवं च सति परमार्थतः सोऽपि मलादिधारको लोकप्रवाहपतित एव गच्छति। यदि कश्चिद् गीतार्थस्तं वारयति असत्प्रवृत्तेस्तदाऽसौ निर्विवेकत्वादत्यन्तं कोपाविष्टस्तं लगुडेन प्रहरतीत्यर्थः ॥ १९ ॥

अथ तस्य गीतार्थानां च चेष्टितमाह—

**धम्मिय जणु सत्थेण वियारइ**
**सु वि ते धम्मिय सत्थि वियारइ ।**
**तव्विहलोइहि सो परियंरियउ**
**तउ गीयत्थिहि सो परिहरियउ ॥ २० ॥**

[ धार्मिको जनः शास्त्रेण विचारयति
सोऽपि तान् धार्मिकान् शस्त्रेण विदारयाति ।
तद्विधलोकैः स परिकरितः
ततो गीतार्थैः स परिहृतः ॥ २० ॥ ]

धार्मिको जनस्तं मलधारिणमुत्सूत्रादिप्रवृत्तं शास्त्रेण तन्निराकारकग्रन्थेन विचारयति अयुक्तत्वेन ख्यापयति। सोऽपि तान् धार्मिकान् शस्त्रेण कोपवशाद् विदारयति । तद्विधलोकैस्तत्सदृशप्रवाहपतितजनैरसौ परिकरितोऽङ्गीकृतः। ततो गीतार्थैः स दूरेण वर्जित इत्यर्थः ॥ २० ॥

**जो गीयत्थु सु करइ न मच्छरु**
**सु वि जीवंतुं न मिल्लइ मच्छरु ।**
**सुद्धइ धम्मि जु लग्गइ विरलउ**
**संघि सु बज्झुं कहिज्जइ जवलउ ॥ २१ ॥**

[ यो गीतार्थः स करोति न मत्सरं
सोऽपि जीवन् न मुञ्चति मत्सरम् ।
शुद्धे धर्मे यो लगति विरलः
सङ्घेन स बाह्यः कथ्यते युतकः ॥ २१ ॥ ]

तद् न भवत्युत्कटकस्तिर्यक् प्रेक्षेत यथा विरक्तः ॥

१ क वस्त्रार्धं । २ क.° यरिउ । ३ क. तं निरा° । ४ क. जीविंतु । ५ क. वसु ।

तथा यो गीतार्थः स न करोति मत्सरम् । स च मलिनो जीवन् यावज्जीवं न मुञ्चति गीतार्थेषु मत्सरम् । एवं तावत् कातरास्थिरमलधारकादयः प्रभूताः । शुद्धे च धर्मे प्रतिस्रोतोरूपे यः कश्चिल्लगति विरलः, सङ्घेन प्रवाहपतितजनसमूहेन स शुद्धधर्मलग्नो बाह्यः कथ्यते युतकश्चाण्डालादिवद् भिन्न इत्यर्थः ॥ २१ ॥

पइ पइ पाणिउ तसु वाहिज्जइ
उवसमि थक्कु सो वि वाहिज्जइ ।
तस्सावयं सावय जिव लग्गहिं
धम्मियलोयह च्छिड्डइ मग्गहिं ॥ २२ ॥

[ पदे पदे पानीयं ( छिद्रं ) तस्य गवेष्यते
उपशमे स्थितः सोऽपि बाध्यते ।
तच्छ्रावकाः श्वापदा इव लगन्ति
धार्मिकलोकस्य छिद्राणि मार्गयन्ति ॥ २२ ॥ ]

पदे पदे पानीयं देशविशेषभाषया छिद्रं तस्य शुद्धमार्गलग्नस्य गवेष्यते उपशमेऽवस्थितोऽसावपि दुःसङ्घेन बाध्यते । तच्छ्रावका दुःसङ्घश्रावकाः श्वापदा इव लगन्ति विनाशाय सम्बध्यन्ते । स्वभावत एव च ते धार्मिकलोकस्य छिद्राणि मार्गयन्ति । अयमपि च धार्मिक इत्यर्थः ॥ २२ ॥

अथ तच्छ्रावकाणामेवाविधिकारिणां चेष्टितमाह--

विहिचेईहरि अविहिकरेवइ
करहि उवाय वहुत्ति ति लेवइ ।
जइ विहिजिणहरि अविहि पयट्टइं
ता घिउं सत्तुयमज्झि पलुट्टइ ॥ २३ ॥

[ विधिचैत्यगृहेऽविधिकरणे
कुर्वन्त्युपायान् बहूंस्ते तद्ग्रहणे ।
यदि विधिजिनगृहेऽविधिः प्रवर्तते
तदा घृतं सक्तुमध्ये प्रलुठति ॥ २३ ॥ ]

विधिचैत्यगृहे मत्सरवशादविधिकरणे कुर्वन्त्युपायान् बहून् ते तच्छ्रावका ग्रहणे विधिचैत्यस्य । किमित्येषामाविधिकरणे आग्रहः ? अत आह यदि विधिजिनगृहे

१ क. शुद्धे धं° । २ ख. ग. °वए । ३ क. लग्गहि । ४ ख. °मार्गे ल°, ग. °धर्मे ल° । ५ ख. पयमज्झि पलुट्टइ । ६ क. घियउ । ७ क. °करण ।

अविधिर्निशिस्नानादिकः प्रवर्तते तदा घृतं सक्तुषु प्रलुठति तद्वत् समीहितं समीहितेन संयुज्यते इति तेषां भाव इत्यर्थः ॥ २३ ॥

अथ तत्प्रार्थनया नृपतिचेष्टितमाह—

**जइ किर नरवइ कि वि दूसमवस**
**ताहि[1] वि अप्पहि विहिचेइय दस ।**
**तह वि न धम्मिय विहि विणु झगडहि**
**जइ ते सव्वि वि उट्ठहि[2] लगुडिहि ॥ २४ ॥**

[ यदि किल नरपतयः केऽपि दुःषमावशात्
तेषामप्यर्पयन्ति विधिचैत्यानि दश ।
तथापि न धार्मिका विधिं विना कलहायन्ते
यदि ते सर्वेऽप्युत्तिष्ठन्ते लगुडैः ॥ २५ ॥ ]

यदि किल केऽपि नृपतयः केचन निर्विवेकिनो लुब्धा दुःख( ष )मावशाद् दुष्टकालमाहात्म्याल्लोभाभिभूतास्तेषामप्यविधिकारिणामर्पयन्ति पूजनाय विधिचैत्यानि 'दशेति यमकानुरोधेन तेन त्रीणि चत्वारि वेति द्रष्टव्यम्' । तथापि विधिचैत्यापहारेऽपि धार्मिका विधिं विना युक्तिमन्तरेण न तैः सह कलहायन्ते । यदि ते विपक्षाः सर्वेऽप्युत्तिष्ठन्ते लगुडैः प्रहर्तुमित्यर्थः ॥ २४ ॥

नन्वेवं सति तेषां विधिचैत्यसंघट्टनं[3] कथं भविष्यतीत्याह—

**निच्चु वि सुगुरु–देवपयभत्तह**
**पणपरमिट्ठि सरंतह संतह ।**
**सासणसुर पसन्न[4] ते भव्वइं[5]**
**धम्मिय कज्ज पसाहहि[6] सव्वइं ॥ २५ ॥**

[ नित्यमपि सुगुरु–देवपदभक्तानां
पञ्चपरमेष्ठिनः स्मरतां सताम् ।
शासनसुराः प्रसन्नास्ते भव्यानि
धार्मिककार्याणि प्रसाधयन्ति सर्वाणि ॥ २६ ॥ ]

नित्यमपि सुगुरु–देवपदभक्तानां पञ्चपरमेष्ठिमन्त्रं स्मरतां सतां शासनसुराः स्वयमेव प्रसन्ना भवन्ति । ते च भव्यानि मनोऽभीष्टानि धार्मिककार्याणि विधिचैत्यलाभादीनि सर्वाणि साधयन्तीत्यर्थः ॥ २५ ॥

---

१ क. ताहि विहि° । २ क. उट्ठिहि । ३ क. संघटनं । ४ ख. ग. पस्सन्न । ५ क. भव्वइ । ६ ख. ग. पलाहहिं ।

धम्मिउ[1] धम्मुकज्जु साहंतउ
परु मारइ कीवइ जुज्झंतउ।
तु वि तसु धम्मु अत्थि न हु नासइ
परमपइ[2] निवसइ सो सासइ ॥ २६ ॥
[ धार्मिको धर्मकार्यं साधयन्
परं मारयति कथमपि युध्यमानः।
तथापि तस्य धर्मोऽस्ति न खलु नश्यति
परमपदे निवसति स शाश्वते ॥ २६ ॥ ]

धार्मिको धर्म्मकार्यं विधिचैत्यग्रहणादिकं साधयन् सन् कदाचित् परं विपक्षं तदुपघाताय प्रवृत्तं कथमपि मर्मप्रहारादिना व्यापादयति युध्यमानस्तेन सह तथापि तस्य निश्चयनयेन धर्मोऽस्त्येव केवलविधिप्रवर्त्तनाय विधिचैत्यग्रहणं[3]-प्रवृत्तेः। न तु नैव तद्व्यापादनेन धर्मो नश्यति। तथा च क्रमेण परमपदे मोक्षे निवसति स शाश्वते। अयमत्र भावार्थः--धार्मिकः केवलविधिविधानलालसः सन् अविधिं सर्वथाऽसहमानोऽविधिकारकान् "(१)जिणपवयणस्स अहियं सव्वत्था[4]मेण वारेइ' त्ति सिद्धान्तवचनानुस्मरणेन यथा तथा निवारयन् कदाचित् परं हन्यादपि तथाप्यत्यन्तशुद्धमनस्कत्वात् शुद्धचारित्रपरिपालनप्रवृत्तसहसाकारनिपातितद्वीन्द्रियादिमहामुनिवन्निष्पाप एव। तथा चोच्यते-

"(२)उच्चालियँम्मि[5] पाए इरियासमियस्स संकमट्ठाए।
वावज्जिज्ज कुलिंगी मरिज्ज तं योगमासज्ज॥
न य तस्स तन्निमित्तो बंधो सुहुमो वि देसिओ समए।
अणवज्जो[6]हपओगेण सव्वभावेण सो जम्हा॥" इत्यर्थः ॥२६॥

सावय विहिधम्मह अहिगारिय
जिज्ज न हुंति दीहसंसारिय।
अविहि करिंति न सुहगुरुवारिय
जिणसंबंधिय धरहि न दारिय॥ २७॥

(१) जिनप्रवचनस्याहितं सर्वस्थाम्ना वारयेत् इति।
(२) उच्चालिते पादे ईर्यासमितस्य सङ्क्रमार्थम्।
व्यापद्येत कुलिङ्गी म्रियेत तं योगमासाद्य॥
न च तस्य तन्निमित्तो बन्धः सूक्ष्मोऽपि देशितः समये।
अनवद्यौघप्रयोगेण सर्वभावेन स यस्मात्॥

१ ख. ग. धाम्मिय। २ क.° प्पइ। ३ ख. ग.° ग्रहः। ४ क.° ग्रहणाप्र°। ५ क. उच्चलयमि। ६ ख. ग.°ज्जोय°।

[ श्रावका विधिधर्मस्याधिकारिणो
य एव न भवन्ति दीर्घसंसारिणः ।
अविधिं कुर्वन्ति न शुभगुरुवारिता
जिनसम्बन्धिनीं धारयन्ति न दारिकाम् ॥ २७ ॥ ]

श्रावका विधिधर्माधिकारिणस्त एव ये न भवन्ति महानर्थहेत्वकार्यनिवृत्ति-व्यङ्ग्यशुद्धाचित्तत्वेन दीर्घसंसारिणः । अविधिं जिनभवने भोजन-शयनादिरूपं नैव कुर्वन्ति शुभगुरुवारिताः । इदं च पदमुत्तरत्रापि सर्वत्र योज्यम् । तथा जिनसम्बन्धिनीं तत्परिग्रहस्थितां वेश्यां न धारयन्ति, तस्याः सर्वदा पापप्रपा-रूपत्वादित्यर्थः ॥ २७ ॥

अथ विधिमेवाह—

**जइ किर फुल्लई लब्भइ मुल्लिण**
**तो वाडिय न करहिं सहु कूविण ।**
**थावर घर-हट्टइ न करावहि**
**जिणधणु संगहु करि न वड्ढारहि ॥ २८ ॥**

[ यदि किल पुष्पाणि लभ्यन्ते मूल्येन
तदा वाटिकां न कुर्वन्ति सह कूपेन ।
स्थावराणि गृह-हट्टादीनि न कारयन्ति
जिनधनं सङ्ग्रहं कृत्वा न वर्धयन्ति ॥ २८ ॥ ]

यदि किल पुष्पाणि मूल्येन लभ्यन्ते तदा वाटिकां न कुर्वन्ति सह कूपेन स्थावराणि स्थिरतराणि देवसत्कतया देवद्रव्येणैव गृह-हट्टादीनि न कारयन्ति । जिनस्य धनं गणिम-धरिम-मेय-पारिच्छेद्यादिरूपं तद्द्रव्येण संगृह्य न वर्धयन्ति जिनस्य (?) ॥ २८ ॥

**जइ किर कु वि मरंतु घर-हट्टइ**
**देइ त लिज्जहिं लहणावट्टइं ।**
**अह कु वि भत्तिहि देइ त लिज्जहि**
**तब्भाडंयधाणि जिण पूइज्जहि ॥ २९ ॥**

[ यदि किल कोऽपि म्रियमाणो गृह-हट्टं
ददाति तदा गृह्यते लभ्यानुसारेण ।

१ ख. ग. °व्यंग° । २ क. °शयनरूपं । ३ क. सर्वत्रापि । ४ ख. ग. ° हिं । ५ क. करहिं । ६ क. संगहु उ । ७ क. कारयन्तीत्यर्थः । ८ ख. ग लिज्जहिं । ९ ख. ग. °वट्टइ । १० ख. ग. तब्भाडइ° ।

अथ कोऽपि भक्त्या ददाति तदा गृह्यते
तद्भाटकधनेन जिनाः पूज्यन्ते ॥ २९ ॥ ]

यदि किल कश्चिद् देवद्रव्याधमर्ण ऋणमोक्षाय म्रियमाणः सन् वस्त्वन्तराभावेन गृहं हट्टं वा जिनाय ददाति, तदा गृह्यते लभ्यद्रव्यानुसारेण । अथ कश्चिद् भक्त्या ददाति, तदापि गृह्यते । तस्य गृहादेर्भाटकधनेन जिनाः पूज्यन्ते इति विधिः । शेषस्तु पूर्वोक्तः स्थावरविधानादिरविधिरेवेत्यर्थः ॥ २९ ॥

**दिंतं[1] न सावय ते वारिज्जहिं**
**धम्मिकज्जि ते उच्छाहिज्जहिं ।**
**घरवावारु[2] सव्वु जिव मिल्लहिं**
**जिव न कसाइंहिं[3] ते पिल्लिज्जहिं ॥ ३० ॥**

[ ददतो न श्रावकास्ते वार्यन्ते
धर्मकार्ये ते उत्साह्यन्ते ।
गृहव्यापारं सर्वं यथा मुञ्चन्ति
यथा न कषायैस्ते पीड्यन्ते ॥ ३० ॥

ददतो गृह-हट्टादीन् ते श्रावका न वार्यन्ते, प्रत्युत धर्मकार्ये देवद्रव्यऋणविशोधने उत्साह्यन्ते । तथा तद्दानप्रवृत्ताः सन्तो गृहव्यापारं सर्वं वृत्तिव्यवच्छेदकारिव्यवहारं मुक्त्वा यथा मुञ्चन्ति । यथा च कषायैः क्रोध-लोभादिभिस्ते न पीड्यन्त इत्यर्थः ॥ ३० ॥

किञ्च--

**तिव तिव धम्मु कहिंति[4] सयाणा[5]**
**जिव ते मरिवि हुंति सुरराणा ।**
**चित्तासोय करंत ट्ठाहिय**
**जण तहिं कय हवंति नट्ठाहिय ॥ ३१ ॥**

[ तथा तथा धर्मं कथयन्ति शिष्टा
यथा ते मृत्वा भवन्ति सुरराजाः ।
चैत्राश्विनयोः कुर्वन्त्यष्टाह्निका
जनास्तत्र कृता[ष्टाह्निका] भवन्ति नष्टाहिताः ॥ ३१ ॥ ]

तथा तथा धर्मं कथयन्ति शिष्टाः सुश्रावकास्तेषां यथा तत्प्रभावेन मृत्वा ते भवन्ति सुरनायकाः । तथा चैत्राश्विनयोः कुर्वन्त्यष्टाह्निकाः[6] शाश्वतयात्राः । यत्तु चतुर्मासक-पर्युषणादिष्वष्टाह्निकाप्ररूपणं तन्न गीतार्थगुरुसम्मतम् । तत्र हि प्रकृष्ट-

१ क. दिंति । २ क. घरु । ३ ख. ग. कसाइहि । ४ ख. ग. कहंति । ५ ख. ग. सयणो । ६ ख. ग.° ष्टाह्निकाः ।

पूजामात्रस्याष्टाह्निकाशब्देन विवक्षितत्वात्। न च तदष्टाह्निकाशब्दाभिधेयं न भवतीति वाच्यम्, तस्य षष्ठाङ्गविवरणे अभयदेवसूरिभिस्तथा वर्णनात् । जनाः श्रावकलोकास्तत्र चैत्रादौ ' कृतेति पदैकदेशे पदसमुदायोपचारात् ' कृताष्टाह्निका भवन्ति नष्टाहिता ध्वस्ताधयो वा इत्यर्थः ॥ ३१ ॥

अथागमिकं प्रकारान्तरमप्याह—

जिव कल्लाणयपुट्ठिहि किज्जहिं
तिव करिंति सावय जहसत्तिहिं ।
जा लहुडी सा नच्चाविज्जइ
वड्डी सुगुरु-वयणि आणिज्जइ ॥ ३२ ॥

[ यथा कल्याणकपृष्ठे क्रियन्ते
तथा कुर्वन्ति श्रावका यथाशक्त्या ।
या लघ्वी सा नर्त्यते
बृहती सुगुरुवचनेनानीयते ॥ ३२ ॥ ]

यथा जन्मकल्याणादिपृष्ठे क्रियन्ते देवेन्द्रादिभिः किल । कृतकल्याणकमहोत्सवा नन्दीश्वरे देवेन्द्रादयोऽष्टाह्निकामहिमाः कुर्वन्ति । तद् यदि तदनुसारेण श्रावका अप्यत्यन्तमृद्धिमन्तः क्वचित् कल्याणकानन्तरमष्टाह्निका आरभन्ते तदा न दोषः । तथा कुर्वन्ति श्रावका यथासामर्थ्यं तथा विधिपरैः श्रावकैर्लघ्वी नर्तकी सा विधिचैत्ये नर्तनं कार्यते निर्विकारत्वात् । याऽपि बृहती सा सुगुरुवचनेनैव नर्त्तनायानीयते । अयमत्राशयः–यद्यपि तरुणविदग्धरूपवतीनर्त्तकीनर्त्तने प्रेक्षणकं सातिशयशोभं भवति; तथापि प्रतिदिनं तदागमने तरुणश्रावकपुत्रादीनां तस्या जिनद्रव्यदानादौ चित्तविश्लेषो भवति । तन्निमित्तं च क्रमेण देवगृहत्यागादिना धर्मादपि प्रतिपातो भवतीति विमृश्य गीतार्थैरागमानिषिद्धमपि सर्वदा तदागमनं न्यषेधि । कदाचित् तु देवगृहादिप्रतिष्ठायां जलानयनादिमहोत्सवे सातिशयप्रेक्षणकादिनिर्वाहाय सा आकारयितुमिष्यते श्रावकैः, परं बहुतरदोषदृष्ट्या गुरुभिरत्यन्तं निषेधे गुर्वाज्ञामन्तरेण न ते तामाह्वातुं प्रभवन्ति, अत्यन्ताज्ञापरत्वात । ततस्तादृशे प्रस्तावे गुरुमापृच्छ्यानयन्तीत्यभिप्रायेण ' वड्डी सुगुरुवयणेण ' इत्यादि अभिधीयते । ततोऽहो! युगप्रधानानां निर्विकारं वचनमित्याद्युपहासः केषाञ्चिद् दुर्विदग्धानां सर्वथा नावकाशं लभत इत्यर्थः ॥ ३२ ॥

---

१ ख. ग.° णपुढिहिं । २ क. तथा । ३ क.° पि तदपि । ४ क.° दानादानादौ । ५ क. वा । ६ ख. ग.° प्रेक्षणादि° । ७ क.° रत्यंतनि° । ८ ख. ग.° नंतरेण । ९ क. इत्याद्यभि° ।

**जोव्वणत्थ जा नच्चइ दारी**
**सा लग्गइ सावयह वियारी ।**
**तिहि[1] निमित्तु सावयसुय फट्टहिं**
**जंतिहिं दिवसिहिं धम्मह फिट्टहिं ॥ ३३ ॥**

[ यौवनस्था या नृत्यति दारा
सा लगति श्रावकान् विप्रतारयितुम् ।
तस्या निमित्तं श्रावकसुता विश्लिष्यन्ति
यातेषु दिवसेषु धर्माद् भ्रश्यन्ति ॥ ३३ ॥ ]

यतो यौवनस्था वेश्या या प्रतिदिनं नृत्यति साऽत्यन्तपरिचयात् प्रवर्त्तते श्रावकान् तरुणान् विप्रतारयितुम् । धर्म्माध्यवसायात् कामाध्यवसायप्रवर्त्तकत्वं विप्रतारणम् । तस्या निमित्तं श्रावकसुताः परस्परतो विश्लिष्टचित्ता भवन्ति । गच्छद्भिश्च दिनैरत्यन्तविरोधेन धर्मादपि भ्रश्यन्तीत्यर्थः ॥ ३३ ॥

**बहुय लोय रायंध स पिच्छंहि[2]**
**जिणमुह-पंकउ विरला वंछहिं[3] ।**
**जणु जिणभवणि[4] सुहत्थु जु आयउ**
**मरइ सु तिक्खकडक्खिहिं[5] घायउ ॥ ३४ ॥**

[ बहवो लोका रागान्धास्तां प्रेक्षन्ते
जिनमुखपङ्कजं विरला वाञ्छन्ति ।
जनो जिनभवने सुखार्थं य आगतो
म्रियते स तीक्ष्णकटाक्षैर्घातितः[6] ॥ ३४ ॥ ]

बहवो लोका रागान्धास्तामेव प्रेक्षन्ते । जिनमुखपङ्कजं विरला वाञ्छन्ति द्रष्टुम् । तथा च जिनभवने सुखार्थं सर्वथोपशान्तचित्तत्वेनाह्लादमनुभवितुं य आगतः स म्रियते दुःखातिशयमनुभवति तत्तीक्ष्णकटाक्षैः प्रहत इत्यर्थः ॥ ३४ ॥

**राग विरुद्धा नवि गाइज्जहिं**
**हियइ धरंतिहि जिणगुण गिज्जहिं ।**

---

१ क. तहि । २ ख. ग. पिच्छहिं । ३ ख. ग. वंछहिं । ४ ख. ग. °भवण । ५ क. कड़क्खहिं । ६ ख. ग. °क्षैर्हतं ।

**पाड वि न हु अजुत्त वाइज्जहिं**
**लइबुडिडडंडि-पमुह वारिज्जहिं ॥ ३५ ॥**

[ रागा विरुद्धा नैव गीयन्ते ।
हृदये धारयद्भिर्जिनगुणा गीयन्ते ।
पाटा अपि नैवायुक्ता वाद्यन्ते
लइबुडिडडंडिप्रमुखा वार्यन्ते ॥ ३५ ॥ ]

रागा भैरव-मेघरागादयोऽत्यन्तशोकाविर्भावकत्वेन विरुद्धा नैव गीयन्ते। हृदये जिनगुणानेव धारयद्भिर्जिनानामेव गुणा गीयन्ते, न त्वन्येषाम् । पाटा अपि पाणविकादिप्रसिद्धा नैवायुक्ता मरणाद्यवस्थासूचका वाद्यन्ते । तानेवाह-लइबुडिडडंडिप्रभृतयः । पाटास्तत्प्रसिद्धा एव वार्यन्तेऽत्यन्तं श्रुतिकटुकत्वादित्यर्थः ॥ ३५ ॥

**उचिय थुत्ति-थुयपाढ पढिज्जहिं**
**जे सिद्धंतिहिं सहु संधिज्जहिं ।**
**तालारासु वि दिंति न रयणिहिं**
**दिवसि वि[1] लउडारसु सहुं पुरिसिहिं ॥ ३६ ॥**

[ उचिताः स्तुति-स्तोत्रपाठाः पठ्यन्ते
ये सिद्धान्तेन सह सन्धीयन्ते ।
तालारासकमपि ददति न रजन्यां
दिवसेऽपि लगुडरासं सह पुरुषैः ॥ ३६ ॥

उचितानि स्तुति-स्तोत्राणि देवाग्रे पठ्यन्ते, यानि सिद्धान्तेन सह सन्धीयन्ते, न पुनरुत्सूत्राणि । तालारा[2]सकमपि न ददति श्राद्धा रजन्यां प्रदीपोद्योतेऽपि । तदानीमदृश्यसूक्ष्मपिपीलिकादिध्वंसहेतुत्वात् । दिवसेऽपि लगुड[3]रासं पुरुषैरप्यास्तां योषिद्भिः तस्यात्यन्तविटचेष्टारूपत्वात्, कदाचित् प्रमादवशान्मस्तकाद्याघातहेतुत्वात्, दुष्टपाठादिवत्त्वाच्चेत्यर्थः ॥ ३६ ॥

**धम्मिय नाडय पर नच्चिज्जहिं**
**भरह-सगरनिक्खमण कहिज्जहिं ।**
**चक्कवट्टि-बल-रायह चरियइं**
**नच्चिंवि[4] अंति हुंति पव्वइयइं ॥ ३७ ॥**

---

१ क. च । २ ख. ग. रस । ३ ख. ग. डारसं । ४ ख. ग. नच्चिय अंत ।

[ धार्मिकानि नाटकानि परं नृत्यन्ते
भरत–सगरनिष्क्रमणानि कथ्यन्ते ।
चक्रवर्ति–बलराजस्य चरितानि
नर्तित्वाऽन्ते भवन्ति प्रव्रजितानि ॥ ३७ ॥ ]

**धार्मिकान्येव परं नाटकानि नृत्यन्ते, न तु राम–रावणादिसम्बन्धीनि येषु नाटकेषु भरत–सगरनिष्क्रमणानि कथ्यन्ते । अन्यान्यपि चक्रवर्ति–बलदेव–दशार्णभद्रादिचरितानि च । किं बहुना ? यत्र तानि नर्तित्वा पर्यन्ते प्रव्रज्यादिहेतुः संवेगवासना जायते तन्नर्त्तनीयमित्यर्थः ॥ ३७ ॥**

**हास खिड्ड हुड्ड वि वज्जिज्जहिं
सहु पुरिसेहि वि केलि न किज्जहिं ।
रत्तिहिं जुवइपवेसु निवारहिं
न्हवणु नंदि न पइट्ठ करावहिं ॥ ३८ ॥**

[ हास्य–क्रीडा–हुड्डा अपि वर्ज्यन्ते
सह पुरुषैरपि केलिर्न क्रियते ।
रात्रौ युवतिप्रवेशं निवारयन्ति
स्नपनं नन्दिं न प्रतिष्ठां कारयन्ति ॥ ३८ ॥ ]

**हास्य–क्रीडा–हुड्डा अपि वर्ज्यन्ते चैत्ये । सह पुरुषैरपि चसूरिर्न क्रियते । रात्रौ युवतिप्रवेशं निवारयन्ति सुश्राद्धाः, स्नपनं नन्दिं प्रतिष्ठां च न कारयन्ति । आचार्यादिभिस्तदानीं तदागमनस्यागमनिषिद्धत्वात् तेजस्कायिकादिध्वंसहेतुत्वाच्चेत्यर्थः ॥ ३८ ॥**

**माहमाल–जलकीलंदोलय
ति वि अजुत्त न करंति गुणालय ।
बलि अत्थमियइ दिणयरि न धरहिं
घरकज्जइं पुण जिणहरि न करहिं ॥ ३९ ॥**

[ माघमाला–जलक्रीडाऽऽन्दोलनं
तदप्ययुक्तं न कुर्वन्ति गुणालयाः ।
बलिमस्तमिते दिनकरे न धारयन्ति
गृहकार्याणि पुनर्जिनगृहे न कुर्वन्ति ॥ ३९ ॥ ]

---

१ ख. ग. रिहि ।

माघमाला-जलक्रीडा-देवतान्दोलनं च ता अप्यागमानुक्तत्वात् खिड्ग-क्रीडाप्रायत्वेन चायुक्तत्वान्न कुर्वन्ति गुणालयाः । बलिं पक्वान्नादिरूपमस्तमिते दिनकरे न धारयन्ति । रात्रौ चतुर्विधस्याप्याहारस्य तद्वर्ण-तद्रस-जीवसंसक्ति-मत्त्वेनागमाभिहिततयाऽत्यन्तजुगुप्सितत्वात् । गृहकार्याणि लेखक-वाणिज्य-झगटकादीनि जिनगृहे न कुर्वन्तीत्यर्थः ॥ ३९ ॥

चैत्यसम्बन्धी विधिरुक्तोऽथ विशिष्टाचार्यस्वरूपं व्यवहारं चाह—

**सूरि ति विहिजिणहरि वक्खाणहि**
**तहिं जे अविहि उस्सुत्तु न आणहिं ।**
**नंदि-पइट्ठह ते अहिगारिय**
**सूरि वि जे तदवरि ते वारिय ॥ ४० ॥**

[ सूरयस्ते विधिजिनगृहे व्याख्यानयन्ति
तत्र येऽविध्युत्सूत्रं नानयन्ति ।
नन्दि-प्रतिष्ठयोस्तेऽधिकारिणः
सूरयोऽपि ये तदपरे ते वारिताः ॥ ४० ॥ ]

सूरयस्त एव विधिजिनगृहे व्याख्यानं कुर्वन्ति ये तत्राविधिमुत्सूत्रं वा न किञ्चिदानयन्ति उपदर्शयन्ति । नन्दि-प्रतिष्ठयोरपि त एवाधिकारिणः । सूरयोऽपि ये तदपरे ते निवारिता उत्सूत्रादिप्रवर्त्तकत्वादित्यर्थः ॥ ४० ॥

**एगु जुगप्पहाणु गुरु मन्नहिं**
**जो जिण गणिगुरु पवयणि वन्नहिं ।**
**तासु सीसि गुणसिंगु समुट्ठइ**
**पवयणु-कज्जु जु साहइ लट्ठइ ॥ ४१ ॥**

[ एकं युगप्रधानं गुरुं मन्यन्ते
यं जिना गणिगुरुं प्रवचने वर्णयन्ति ।
तस्य शीर्षे गुणशृङ्गं समुत्तिष्ठते
प्रवचनकार्याणि यः साधयति लष्टानि ॥ ४१ ॥ ]

एकस्मिन् काले एकमेव युगप्रधानं मन्यन्ते सुश्राद्धाः, न बहून् । यं जिना गणिगुरुं समस्ताचार्यश्रेष्ठं प्रवचने सिद्धान्ते वर्णयन्ति । इतरेभ्यस्तस्य को विशेष इत्याह-तस्य युगप्रधानस्य शीर्षे गुणशृङ्गं गुणोच्छ्रयरूपं समुत्तिष्ठते शेषेभ्यः सर्वैरपि गुणैरुत्कृष्यत इत्यर्थः । प्रवचनकार्याणि विशिष्टप्रभावनाऽऽदीनि यः साधयति लष्टानि प्रधानानीत्यर्थः ॥ ४१ ॥

सो छउमत्थु वि जाणइ सव्वइ
जिण-गुरु-समइपसाइण भव्वइ ।
चलइ न पाइण तेण जु दिट्ठउ
जं जि निकाइउ त परि विणट्ठउ ॥ ४२ ॥

[ स च्छद्मस्थोऽपि जानाति सर्वं
जिन-गुरु-समयप्रसादेन भव्यम् ।
चलति न प्रायेण तेन यद् दृष्टं
यत् पुनर्निकाचितं तत् पुनर्विनष्टम् ॥ ४२ ॥ ]

स युगप्रधानश्छद्मस्थोऽपि जानाति सर्वम्, एतत् कालानुसारि ज्ञेयम् । केनेत्याह-जिन-गुरु-सिद्धान्तप्रसादेन भव्यं यथावस्थितं नैसर्गिक-सातिशयप्रज्ञा-वत्त्वात् सिद्धान्तपारगतत्वाच्च, तथा च न चलति न विघटते प्रायेण यत् तेन दृष्टं सम्यक् श्रुतज्ञानप्रदीपेनावलोकितं भविष्यत्वेन क्वचिद् दृष्टमपि यत् पुनर्निका-चितमवश्यमनन्यथा भावि तत् पुनर्विनश्यतीत्यर्थः ॥ ४२ ॥

जिणपवयणभत्तउ जो सक्कु वि तसु
पयचिंत करइ बहु[व]क्कु[1] वि जसु ।
न कसाईहिं[2] मणु पीडिज्जइ
तेण सु देविहि वि ईडिज्जइ ॥ ४३ ॥

[ जिनप्रवचनभक्तो यः शक्रोऽपि तस्य
पदचिन्तां करोति बहुव्यग्रोऽपि यस्य ।
न कषायैर्मनः पीड्यते
तेनासौ देवैरपीड्यते ॥ ४३ ॥ ]

जिनप्रवचने भक्तो योऽतः शक्रोऽपि तत्पदचिन्तामापद्यपि तन्निवर्त्तनादि-विषयां करोति बहुव्यग्रोऽपि । यस्य कषायैर्दुष्टविषय-क्रोधादिभिर्मनो न पीड्यते, तेनासौ देवैः सुरेन्द्रादिभिरपीड्यते स्तूयत इत्यर्थः ॥ ४३ ॥

इन्द्रचिन्ताविषयत्वे कारणान्तरमाह—

सुगुरु-आण मणि[3] सइ जसु निवसइ
जसु तत्तत्थि चित्त पुणु पविसइ ।

---

१ क. °वक्क । २ क. °हि । ३ ग. मण ।

**जो नाइण कु वि [1]जिणवि न सक्कइ**
**जो परवाइ-भइणं[2] नोसक्कइ ॥ ४४ ॥**

[ सुगुर्वाज्ञा मनसि सदा यस्य निवसति
यस्य तत्त्वार्थे चित्तं पुनः प्रविशति ।
यो न्यायेन केनापि जेतुं न शक्यते
यः परवादिभयेन नावष्वष्कते ॥ ४४ ॥ ]

**सुगुरूणामाज्ञा मनसि सर्वदा यस्य निविशते । यस्य तत्त्वार्थे चित्तं पुनः प्रविशति । यं न्यायेन कोऽपि जेतुं न शक्नोति । यः परवादिभयेन नावष्वष्कते नैवापसरतीत्यर्थः ॥ ४४ ॥**

**जसु चरिइण गुणिचित्तु चमक्कइ**
**तसु जु न सहइ सु दूरि निलुक्कइ ।**
**जसु परिचिंतं[3] करहिं जे देवय**
**तसु समचित्त ति थोवा सेवय ॥ ४५ ॥**

[ यस्य चरितेन गुणिचित्तं चमत्करोति
तं यो न सहते स दूरं निह्नुते ।
यस्य परिचिन्तां कुर्वन्ति ये देवाः
तस्य समचित्तास्ते स्तोकाः सेवकाः ॥ ४५ ॥ ]

**यस्य चरितेनाद्भुतेन गुणिनां चित्तं चमत्करोति । तं यो न सहते मत्सरेण दूरमात्मानं निह्नोति ( °ह्नुते ) अयुक्तकारित्वात् । यस्य [4]परिचिन्तां कुर्वन्ति देवतास्तस्यात्यन्तगुणिनः समचित्ता ये ते स्तोकाः सेवका इत्यर्थः ॥ ४५ ॥**

**तसु निसि दिवसि[5] चिंत इह (य) वट्टइ**
**कहिं[6] वि ठावि जिणपवयणु फिट्टइ ।**
**भूरि भवंता दीसहि बोडा**
**जे सु पसंसहि ते परि थोडा ॥ ४६ ॥**

[ तस्य निशि दिवसे चिन्तेयं वर्तते
क्वापि स्थाने जिनप्रवचनं भ्रश्यति ।
भूरयो भ्रमन्तो दृश्यन्ते मुण्डिता
ये तं प्रशंसन्ति ते परं स्तोकाः ॥ ४६ ॥ ]

---

१ ख. ग. जिणिवि । २ क. भयण । ३ क. °चित, ख. ग. चिंतं । ४ क. पर, °ख. परं । ५ ख. ग. दिवसु । ६ ख. ग. कहि ।

तस्य युगप्रवरस्याहर्निशमियमेव चिन्ता वर्तते । क्वापि स्थाने जिनप्रवचनं मालिन्यं मा लभताम् । एवमतिशयेन प्रवचनानुकूल्येऽपि तस्य भूरयो भ्रमन्तोऽपि दृश्यन्ते बोडा मुण्डितशिरसः ये तं प्रशंसन्ति ते स्तोका एवेत्यर्थः ॥ ४६ ॥

प्रत्युत—

**पिच्छंहि[1] ते तसु पइ पइ पाणिउ**
**तसु असंतु दुहु ढोयहिं आणिउं ।**
**धम्मपसाइण सो परि छुट्टइ**
**सव्वत्थ वि सुहकज्जि पयट्टइ ॥ ४७ ॥**

[ प्रेक्षन्ते ते तस्य पदे पदे पानीयं ( च्छिद्रम् )
तस्यासद् दुःखं ढौकयन्त्यानीय ।
धर्मप्रसादेन स परं च्छुट्यते
सर्वत्रापि शुभकार्ये प्रवर्तते ॥ ४७ ॥ ]

प्रेक्षन्ते ते मुण्डितशिरसः पदे पदे पानीयं देशविशेषभाषया छिद्रम् । तस्यासदशोभनं दुःखं परवाद्याद्युत्थापनेन पीडां ढौकयन्ति आनीय । धर्मप्रसादेनैव स तावत्सु दुष्टेषु सत्सु मुच्यते । ततः सर्वत्रापि शुभकार्ये प्रवर्तत इत्यर्थः ॥ ४७ ॥

**तह वि हु ताहि वि सो नवि रूसइ**
**खम न सु मिल्लइ नवि ते दूसइ ।**
**जइ ति वि[2] आवहि तो संभासइ**
**जुत्तु तदुत्तु वि निसुणिवि तूसइ ॥ ४८ ॥**

[ तथापि खलु तेभ्योऽपि स नैव रुष्यति
क्षमां न स मुञ्चति नापि तान् दूषयाति ।
यदि तेऽप्यागच्छन्ति ततः सम्भाषते
युक्तं तदुक्तमपि निश्रुत्य तुष्याति ॥ ४८ ॥ ]

तथाप्येवमपि दुष्टाशयेषु स न रुष्यति । क्षमां तद्विषयानुकूलप्रवृत्तिरूपां न मुञ्चति । न च तान् दूषयति दोषवत्त्वेन ख्यापयति । यदि कदाचित् तेऽप्यागच्छन्ति ततः सम्भाषते । युक्तं तदुक्तमपि श्रुत्वा तुष्यति, न तु दुष्टोक्तत्वेन खण्डयतीत्यर्थः ॥ ४८ ॥

**अप्पु अणप्पु वि न सु बहु मन्नइ**
**थोवगुणु वि परु पिच्छवि वन्नइ ।**

---

१ ख. ग. पिच्छहिं । २ ख. ग. वि तो ।

**एइ वि जइ तरंति भवसायरु**
**ता अणुवत्तउ निच्चु वि सायरु ॥ ४९ ॥**

[ आत्मानमनल्पमपि न स बहु मन्यते
स्तोकगुणमपि परं प्रेक्ष्य वर्णयति ।
एतेऽपि यदि तरन्ति भवसागरं
ततोऽनुवर्तयामि नित्यमपि सादरम् ॥ ४९ ॥ ]

आत्मानमनल्पमपि बहुगुणत्वेन महान्तमपि नासौ बहु मन्यते। स्तोकगुणमपि परं प्रेक्ष्य वर्णयति उपबृंहयति। चिन्तयति चैतेऽपि यदि तरन्ति भवसागरं ततोऽनुवर्त्तयामि सादरं पश्यामि नित्यमित्यर्थः ॥ ४९ ॥

**जुगुपहाणु गुरु इउ परि चिंतइ**
**तं-मूलि वि तं-मण सु निकिंतइ ।**
**लोउ लोयवत्ताणइ भग्गउ**
**तासु न दंसणु पिच्छइ नग्गउ ॥ ५० ॥**

[ युगप्रधानो गुरुरेतदेव चिन्तयति
तन्मूलेऽपि तन्मनः स निकृन्तति ।
लोको लोकवार्तया भग्नः
तस्य न दर्शनं प्रेक्षते नाग्रम् ( नग्नः ) ॥ ५० ॥ ]

युगप्रधानो गुरुरेतदेव पूर्वोक्तं चिन्तयति। तन्मूलेऽपि तत्पार्श्वेऽपि वर्तमानस्तस्य युगप्रधानस्य मनश्चित्तं स दुष्टचित्तो मर्मोद्घट्टनादिना निकृन्तति। 'तं पुण' इति पाठान्तरे तु तं सूरिमिति । तथा तन्मूलान्यपि ज्ञान-दर्शन-चारित्राणि स्वबुद्ध्या पीडयतीति योज्यम्। लोको मुग्धधार्मिकजनो लोकवार्तयैव तथाविधदुष्टविधीयमानगुरुविषयासद्दूषणशतश्रवणेनैव भग्नः सूरिविषयं वैमुख्यमापादितः सन् तस्य सूरेर्दर्शनमपि शान्तरूपं न प्रेक्षते नाप्यग्रं दुष्टभवान्तरलाभलक्षणमित्यर्थः ॥ ५० ॥

एवं युगप्रधानस्वरूपे विहिते तद्विषयं प्रवाहपतितजनवचनमाह—

**इह गुरु केहि वि लोइहि वन्निउं[1]**
**तु वि अम्हारइ संघि न मन्निउ[2] ।**
**अम्हि केम इसु पुट्टिहि लग्गह ?**
**अन्निहि जिव किव नियगुरु मिल्लहं[3] ? ॥ ५१ ॥**

---

१ क. दुष्टं । २ ख. ग. °उं तु । ३ ग. मिल्लहु ।

[ एष गुरुः कैश्चिदपि लोकैर्वर्णितः
ततोऽप्यस्मदीये सङ्घे न मतः ।
वयं कथमस्य पृष्ठे लगामः ?
अन्यैरिव कथं निजगुरुं मुञ्चामः ? ॥ ९१ ॥ ]

**एष गुरुः कैश्चिल्लोकैर्वर्णितः, परमस्मदीयेन सङ्घेन न मानितः । ततोऽस्य पृष्ठे कथं वयं लगामः ? । अन्यैरिव शुद्धविधिधर्म्मप्रवृत्तमुग्धधार्मिकैरिव कथं निजगुरुं मुञ्चाम इत्यर्थः ॥ ५१ ॥**

**पारतंते-विहिविसइ-विमुक्कउ**
**जणु इउँ बुल्लइ मग्गह चुक्कउ ।**
**तिणि जणु विहिधम्मिहि सहुँ झगडइ**
**इह परलोइँ वि अप्पा रगडइ ॥ ५२ ॥**

[ पारतन्त्र्य–विधिविषयैर्विमुक्तो
जन एतद् वदति मार्गाच्च्युतः ।
तेन जनो विधिधार्मिकैः सह कलहायते
इह परलोकेऽप्यात्मानं वञ्चयति ॥ ९२ ॥ ]

**पारतन्त्र्यविधिविषयैर्विमुक्तो जनः प्रवाहपतित एतत् पूर्वोक्तं वदति मार्गभ्रष्टः सन् । यत एतदेवं तेन कारणेन जनः पूर्वोक्त एव । विधिधार्मिकैः सह कलहायते । तथा चासाविह–परलोकयोरात्मानं वञ्चयतीत्यर्थः ॥ ५२ ॥**

**तु वि अविलक्खुँ विवाउ करंतउ**
**किवइ न थक्कइ विहि असहंतउ ।**
**जो जिणभासिउ विहि सु कि तुट्टइ ?**
**सो झगडंतु लोउ परिफिट्टइ ॥ ९३ ॥**

[ तथाप्यविलक्षो विवादं कुर्वन्
कथमपि नावतिष्ठते विधिमसहमानः ।
यो जिनभाषितो विधिः स किं त्रुट्यति ?
असौ कलहायमानो लोकः परिभ्रश्यति ॥ ९३ ॥ ]

**यद्यप्यात्मानं वञ्चयति तथाप्यविलक्षोऽविवेकित्वाददीनो विवादं कुर्वन् धार्मिकैः सह कथमपि नावतिष्ठते विधिमसहमानः । यतो न जानात्यसौ मूर्खो**

---

१ क. °दीयसं° । २ क. मनितः । ३ ख. ग. °तंतु । ४ क. इहु । ५ ख. ग.° हिं सहुं ज्झ° । ६ ख. ग. °लोय । ७ ख. ग. °लखु । ८ ख. ग. ज्झग° ।

यदुत जिनभाषितो विधिः स किं विवादादिनाऽपि त्रुट्यति ?, केवलमसौ कलहायमानो लोक एव भ्रश्यति सद्धर्म्मलाभादित्यर्थः ॥ ५३ ॥

विधेरव्यवच्छेदमेवाह—

दुप्पसहंतु चरणु जं वुत्तउ
तं विहि विणु किव होइ निरुत्तउ ? ।
इक्क सूरि इका वि स अज्जी
इक्कु देसं जि इक्क वि देसज्जी ॥ ५४ ॥

[ दुःप्रसभान्तं चरणं यदुक्तं
तद् विधिं विना कथं भवति निरुक्तम् ?।
एकः सूरिरेकाऽपि साऽऽर्या
एको देशार्य एकाऽपि देशार्या ॥ ५४ ॥ ]

दुःप्रसभान्तं चरणं यदुक्तं भगवता, तद् विधिं विना विधिव्यवच्छेदे कथं भवति निरुक्तं निश्चितम् । यदेकः सूरिर्दुःप्रसभः, एकाऽप्यार्या साध्वी सत्यश्रीनाम्नी, एकश्च देशव्र( विर )तिः श्रावको नागिलनामा, एका च फल्गुश्रीनाम्नी देशेनार्या साध्वी देशविरता श्राविकेत्यर्थः ॥ ५४ ॥

तह वीरह तु वि तित्थु पयट्टइ
तं दस–वीसह अज्जु कि तुट्टइ ? ।
नाण–चरण–दंसणगुणसंठिउ
संघु सु वुच्चइ जिणिहि जहट्ठिउ ॥ ५५ ॥

[ तथा वीरस्य तदपि तीर्थं प्रवर्तते
तद् दशभिर्विंशत्याऽद्य किं त्रुट्यति ? ।
ज्ञान-चरण-दर्शनगुणसंस्थितः
सङ्घः स उच्यते जिनैर्यथास्थितः ॥ ५५ ॥ ]

तथापि वीरस्य तीर्थं प्रवर्त्तते तद् दशभिर्विंशत्या वा प्रभूतसुसाध्वाद्युपलक्षणं चैतदद्य किं त्रुट्यति ? नैव । तत्र च सर्वत्रापि विधिरस्त्येव । न चैकादिसाध्वादिभावे कथमसौ सङ्घः? यतः ज्ञान–दर्शन–चारित्रगुणसंस्थितः स्तोकोऽपि सङ्घः स उच्यते जिनैर्यथावस्थितः सत्यो न तु प्रभूत एव मेलक इत्यर्थः ॥ ५५ ॥

दव–खित्त–काल–ठिइ वट्टइ
गुणि–मच्छरु करंतु न निहट्टइ ।

१ क. ख. सन्नि । २ क. ख. संज्ञ° ।

**गुणविहूणु संघाउ कहिज्जइ**
**लोअपवाहनईए जो निज्जइ ॥ ५६ ॥**

[ द्रव्य–क्षेत्र–कालस्थित्या वर्तते
गुणिमत्सरं कुर्वन् न निवर्तते ।
गुणविहीनः सङ्घातः कथ्यते
लोकप्रवाहनद्या यो नीयते ॥ ५६ ॥ ]

द्रव्य–क्षेत्र–कालस्थित्या तदनुसारेण वर्तते । गुणिषु च मत्सरं न करोत्येव। कदाचित् कुकर्म्मवशात् तत्करणेऽपि तत्रैव न स्थिरतराशयो भवति । अथ दुःसङ्घस्वरूपमाह—गुणविहीनो बहुजनोऽपि सङ्घात एव कथ्यते लोकप्रवाहनद्या यो नीयत इत्यर्थः ॥ ५६ ॥

तथा—

**जुत्ताजुत्तु वियारु न रुच्चइ**
**जसु जं भावइ तं तिण वुच्चइ ।**
**अविवेइहिं सु वि संघु भणिज्जइ**
**परं गीयत्थिहिं किव मन्निज्जइ ? ॥ ५७ ॥**

[ युक्तायुक्तविचारो न रोचते
यस्य यद् भाति तत् तेनोच्यते ।
अविवेकिभिः सोऽपि सङ्घो भण्यते
परं गीतार्थैः कथं मन्यते ? ॥ ५७ ॥ ]

युक्तायुक्तविचारो यस्मै न रोचते, तत्सङ्घातमध्ये च यस्य यद् भात्ययुक्तमपि तत् तेनोच्यते । अविवेकिभिः सोऽपि सङ्घो भण्यते, परं गीतार्थैः कथमसौ सङ्घत्वेन मन्यते ? निर्गुणत्वादित्यर्थः ॥ ५७ ॥

**विणु कारणि सिद्धंति निसिद्धउ**
**वंदणाइकरणु वि जु पसिद्धउ ।**
**तसु गीयत्थ केमं कारण विणु**
**पइदिणु मिलहिं करहिं पयवंदणु ? ॥ ५८ ॥**

[ विना कारणं सिद्धान्ते निषिद्धं
वन्दनाऽऽदिकरणमपि यत् प्रसिद्धम् ।

तस्य गीतार्थाः कथं कारणं विना
प्रतिदिनं मिलन्ति कुर्वन्ति पदवन्दनम् ? ॥ ५८ ॥ ]

विना कारणं '(१)अग्गीयादायन्ने खेत्ते अन्नत्थ ठिइअभावंमि' इत्यादिकं सिद्धान्ते निषिद्धं वन्दनाऽऽदिकरणमपि '(२) वायाइ नमुक्कारो' इत्यादिकं यत् प्रसिद्धं तस्य साध्वादिसङ्घातस्य गीतार्थाः केन हेतुना कारणं विनाऽपि प्रतिदिनं मिलन्ति ? कुर्वन्ति च पदवन्दनम् ? नैवेत्यर्थः ॥ ५८ ॥

प्रवाहपतितश्च जनः—

**जो असंघु सो संघु पयासइ**
**जु ज्जि संघु तसु दूरिण नासइ ।**
**जिव रायंध जुवइदेहंगिहिं**
**चंद कुंद अणहुंति वि लक्खहिं ॥ ५९ ॥**

[ योऽसङ्घस्तं सङ्घं प्रकाशयति
यश्च सङ्घस्तस्माद् दूरेण नश्यति ।
यथा रागान्धा युवतिदेहाङ्गेषु
चन्द्र-कुन्दादीनसतोऽपि लक्षयान्ति ॥ ५९ ॥ ]

योऽसंङ्घः तं सङ्घमिति प्रकाशयति, यश्च सुसङ्घस्तस्माद् दूरेण नश्यति । किमित्येवमित्याह—यथा रागान्धा युवतिदेहावयवेषु चन्द्र-कुन्दादीनसतोऽपि लक्षयन्तीत्यर्थः ॥ ५९ ॥

**तिवं[२] दंसणरायंध निरिक्खहिं[३]**
**जं न अत्थि तं वत्थु विवक्खहिं[३] ।**
**ते विवरीयदिट्ठि सिवसुक्खइं[३]**
**पाविहिं[३] सुमिणिं[४] वि कह पच्चक्खइं[५] ? ॥ ६० ॥**

[ तथा दर्शनरागान्धा निरीक्षन्ते
यद् नास्ति तद् वस्तु विवक्षान्ति ।
ते विपरीतदृष्टयः शिवसौख्यानि
प्राप्नुवन्ति स्वप्नेऽपि कथं प्रत्यक्षेण ? ॥ ६० ॥ ]

तथा वेषमात्रमेव प्रमाणमिति दर्शनरागान्धा निरीक्षन्ते । तथा च यदसङ्घे सङ्घत्वं नास्ति, तमपि पदार्थं विशेषेण पश्यन्ति । ते विपरीतदृष्टयः शिवसौख्यानि प्राप्नुवन्ति स्वप्नेऽपि नैव, कथं पुनः प्रत्यक्षेणेत्यर्थः ॥ ६० ॥

( १ ) अग्न्याद्याकीर्णे क्षेत्रेऽन्यत्र स्थित्यभावे । ( २ ) वाचा नमस्कारः ।

१ ख. ग. यमसंघं । २ ग. नेव । ३ ख. ग. °हिं । ४ ख. ग. °णे । ५ ख. ग. °इं ।

अथ श्राद्धशिक्षामाह—

दम्म लिंति साहम्मिय-संतिय
अवरुप्परु झंगडंति न दिंति य।
ते विहिधम्मह खिंस महंति य
लोयमज्झि झगडंति करंति य ॥ ६१ ॥

[ द्रम्मान् लान्ति साधर्मिकसत्कान्
परस्परं कलहायन्ते न ददति च।
ते विधिधर्मस्य खिंसां महतीं च
लोकमध्ये कलहायमानाः कुर्वन्ति च ॥ ६१ ॥ ]

ये लोभाभिभूताः सन्तो द्रम्मान् गृह्णान्ति साधर्मिकसत्कान्। ततः परस्परं कलहायन्ते, न ददति। ते विधिधर्म्मस्य खिंसां जुगुप्साविशेषं महतीं लोकमध्ये कलहायमानाश्च कुर्वन्तीत्यर्थः ॥ ६१ ॥

एवं च सति—

जिणपवयण-अपभावण वड्डी
तउ सम्मत्तह वत्त वि बुड्डी।
जुत्तिहि देवदव्वु तं भज्जइ
हुंतउं मग्गइ तो वि न दिज्जइ ॥ ६२ ॥

[ जिनप्रवचनाप्रभावना महती
ततः सम्यक्त्वस्य वार्ताऽपि नष्टा।
युक्त्या देवद्रव्यं तद् भज्यते
सत् मार्गयति तथापि न दीयते ॥ ६२ ॥ ]

जिनप्रवचनस्याप्रभावना महती। ततोऽप्रभावनायाः सकाशात् सम्यक्त्वस्य प्रभावनाव्यङ्ग्यस्य वार्त्ताऽपि समुद्रंपतितरत्नमिव नष्टा। किमिति सम्यक्त्वं नश्यतीत्याह—युक्त्या विचारेण देवद्रव्यं तद् भज्यते। यतः साधर्मिकद्रव्यं सप्तक्षेत्र्यामुपयुज्यते, तत्र च जिनभवन-बिम्बादिकमस्ति। ततः साधर्मिकद्रव्यभङ्गे परमार्थतो जिनभवन-बिम्बादिद्रव्यभङ्गः क्रियत इति भावः। गृहे सदपि तस्य मार्ग्गयतोऽपि तथापि यदि न दीयत इत्यर्थः ॥ ६२ ॥

बेट्टा बेट्टी परिणाविज्जहिं
ते वि समाणधम्म-घरि दिज्जहिं।

---

१ ख. ग. उझग°। २ ख. ग. महिंति। ३ ख. ग. वडी। ४ क. °तउ। ५ ख. ग. समुद्रे प°। ६ क. जिनविंबा°।

**विसमधम्म–घरि जइ वीवाहइ**
**तो सम(म्म)त्तु सु निच्छइ वाहइ ॥ ६३ ॥**

[ पुत्राः पुत्रिकाः परिणाय्यन्ते
तेऽपि समानधर्मगृहे दीयन्ते ।
विषमधर्मगृहे यदि विवाहयति
तदा सम्यक्त्वं स निश्चयेन बाधते ॥ ६३ ॥ ]

पुत्राः पुत्रिकाश्च गृहस्थैश्चायोगे नैव विवाह्यन्ते । तत्रोपदेशमाह–तेऽपि समानधर्मगृहे दीयन्ते इति पुत्रिकाविषयं बोद्धव्यम् । विषमधर्म्मा विभिन्नधर्म्माणस्तद्गेहे यदि विवाहयति पुत्रादीन् तदा सम्यक्त्वं स निश्चयेन बाधते स्वस्य परस्य च । तत्संसर्ग्गेण कदाचिच्छुद्धधर्म्ममार्गात् प्रच्यवनस्यापि सम्भवादिति भाव इत्यर्थः ॥ ६३ ॥

**थोडइ धणि संसारियकज्जइं**
**साहिज्जइं सबइं सावज्जइं ।**
**विहिधम्मत्थि अत्थु विव्विज्जइं**
**जेण सु अप्पु निव्वुइ निज्जइ ॥ ६४ ॥**

[ स्तोकेन धनेन सांसारिककार्याणि
साध्यन्ते सर्वाणि सावद्यानि ।
विधिधर्मार्थेऽर्थ उपयोज्यते
येन स आत्मा निर्वृतिं नीयते ॥ ६४ ॥ ]

स्तोकेनैव धनेन सांसारिककार्याणि विवाह–मुण्डनादीनि सर्वाणि सावद्यानि साध्यन्ते । विधिधर्मार्थे जिन–सङ्घपूजादावर्थः प्रभूततरोऽप्युपयोज्यते । येन स शुद्धविधिविधाता आत्मा निर्वृतिं नीयत इत्यर्थः ॥ ६४ ॥

**सावय वसहिं जेहिं किर ठावहिं**
**साहुणि साहु तित्थु जइ आवँहिं ।**
**भत्त वत्थ फासुय जल आसण**
**वसहिं वि दिंति य पावपणासण ॥ ६५ ॥**

[ श्रावका वसन्ति येषु किल स्थानेषु
साध्व्यः साधवस्तत्र यद्यागच्छन्ति ।

---

१ ख. ग. °स्थैः स्वयो° । २ क. ग. नगृ° । ३ ख. ग. °इं । ४ ख. ग. °ज्जुइ । ५ ख. ग. अप्पा । ६ क. ठाविहि । ७ क. °हि । ८ क. ग. पुत्त फालुय ।

भक्त-वस्त्र-प्रासुकजलासनानि
वसतिमपि ददति च पापप्रणाशनान् ( °काः ) ॥ ६५ ॥ ]

**श्रावका वसन्ति येषु ग्राम-नगरादिषु किल स्थानेषु साध्व्यः साधवो वा विहारक्रमेण यदि तत्रागच्छन्ति तदा आगतानां साध्व्यादीनां भक्त-वस्त्र-प्रासुक-जलासनानि वसतीश्च ददति। प्रासुकपदं चैषणीयोपलक्षणं तच्च मध्यस्थितमपि भक्तादिषु सर्वेषु योज्यम्। पापप्रणाशनान् भक्तादीन् पापप्रणाशका वा श्राद्धाः। न ददतीति पाठे तुं काका पापप्रणाशना ' न भवन्ति' इति शेष इत्यर्थः॥ ६५॥**

**जइ ति वि कालुचिय-गुणि वट्टहिं**
**अप्पा परु वि धरहि विहिवट्टहिं।**
**जिण-गुरुवेयावच्चुं करेवउ**
**इउ सिद्धंतिउ वयणु सरेवउ॥ ६६॥**

[ यदि तेऽपि कालोचितगुणे वर्तन्ते
आत्मानं परमपि धारयन्ति विधिमार्गे।
जिन-गुरुवैयावृत्त्यं कार्य-
मिति सैद्धान्तिकं वचनं स्मर्तव्यम्॥ ६६॥ ]

**यदि तेऽपि साध्वादय आगताः सन्तः कालोचितविधिना वर्तन्ते। आत्मानं परं च श्रावकादिकं स्थापयन्ति विधिमार्गे तदा जिन-गुर्वोर्वैयावृत्त्यं कार्यमिति सैद्धान्तिकं वचनं '(१)गुरु-देवाणं जहासमाहीए वेयावच्चे नियमो' इत्यादिकं स्मर्त्तव्य-मनुष्ठेयं चेत्यर्थः॥ ६६॥**

**घणमाणुसु कुडुंबुं निबाहइ**
**धम्मवार पर हिट्ठउ वाहइ।**
**तिणि सम्मत्त-जलंजलि दिन्नी**
**तसु भवभमणि न मइ निविन्नी॥ ६७॥**

[ घनमानुषं कुटुम्बं निर्वाहयति
धर्मावसरे परमधो वाहयति ( भवति )।
तेन सम्यक्त्वजलाञ्जलिर्दत्त-
स्तस्य भवभ्रमणे न मतिर्निर्विण्णा॥ ६७॥ ]

( १ ) गुरु-देवयोर्यथासमाधि वैयावृत्त्ये नियमः।

१ ख. ग. तु पाप°। २ क. °हि। ३ क. °वच्च। ४ ख. ग. आत्मा परं। ५ क. कुडंबु। ६ ख. ग. °भवणि।

प्रभूतमानुषं स्वकुटुम्बं निर्वाहयति कश्चित्, परं कृपणतया धर्म्मप्रयोजने देव-साधुदानादावदित्सयाऽधोदृष्टिरेव भवति । तेन सम्यक्त्वस्य जिन-साधुभक्तिव्यङ्ग्यस्य जलाञ्जलिर्दत्तस्तन्नूनं तस्य भवभ्रमणे मतिरद्यापि न निर्विन्न(ण्णे)त्यर्थः ॥ ६७ ॥

सधणु सजाइ जु ज्जि तसु भत्तउ
अन्नह सद्दिट्ठिहि वि विरत्तउ ।
जे जिणसासणि हुंति पवन्ना
त सवि बंधव[2] नेहपवन्ना ॥ ६८ ॥
[ सधनः सजातिर्य एव तस्य भक्तो
ऽन्यस्मात् सद्दृष्टेरपि विरक्तः ।
ये जिनशासनं भवन्ति प्रपन्ना-
स्ते सर्वे बान्धवाः स्नेहप्रपन्नाः ॥ ६८ ॥ ]

साधर्मिको यः सधनः स्वजनो वा तत्रैव भक्तः, अन्यस्मात् सद्दृष्टेरपि प्रधानश्रावकादपि विरक्तः । अयुक्तं चैतत् यतो ये जिनशासनं भवन्ति प्रतिपन्नास्ते सर्वेऽपि बान्धवा एव स्नेहप्रतिपन्ना इत्यर्थः ॥ ६८ ॥

तसु संमत्तु होइ किव मुद्धह ?
जो नवि वयणि विलग्गइ बुद्धह ।
तिन्नि चयारि[3] छुत्तिदिण रक्खइ
स ज्जि सरावी लग्गइ लिक्खइ ॥ ६९ ॥
[ तस्य सम्यक्त्वं भवति कथं मुग्धस्य ?
यो नैव वचने विलगति बुद्धानाम् ।
त्रीणि चत्वारि छुप्तिदिनानि रक्षति
सैव श्राविका लगति लेख्यके ॥ ६९ ॥ ]

तस्य सम्यक्त्वं कथं भवति मुग्धस्य ? यो नैव वचने "(१) सहधम्मियरा मह बंधवा' इत्येवंरूपे विशेषेण लगति बुद्धानां तीर्थकराणाम् । अथात्रैव श्राविकाशिक्षामाह—त्रीणि चत्वारि वा दिनानि छुप्तिं रक्षति मृद्भाण्डादिस्पर्शवर्ज्जनेन, विशेषतश्च साधु-जिनालयगमनवर्ज्जनेन च या; सैव श्राविका लेख्यके सुश्राविकागणनायां गण्यते । छुप्तयश्चाशौचविशेषा एवं लोके श्रूयन्ते—

" जात-मृत-सूतकदिने रजस्वला-वमन-मूत्र-विष्टासु ।
मद्ये चण्डालादौ स्युः सप्त छुप्तयो लोके ॥" इत्यर्थः ॥ ६९ ॥

( १ ) सहधर्मकरा मम बान्धवाः ।

१ क. स. । २ ग. °बंधवा । ३ क. पयारि । ४ क. °हरा ।

**हुंति य च्छुत्ति जल(पव)ट्टइ सेच्छइ**
**सा घर–धम्मह आवइ निच्छइ ।**
**छुत्तिभग्ग घर छड्डइं देवय**
**सासणसुर मिल्लहिं विहिसेवय ॥ ७० ॥**

[ सत्यां च छुतौ प्रवर्त्तते स्वेच्छया
सा गृह–धर्मस्यापद् निश्चयेन ।
छुतिभग्ना गृहाणि मुञ्चन्ति देवताः
शासनसुरा मुञ्चन्ति विधिसेवकाः ॥ ७० ॥ ]

सत्यामपि छुतौ स्वेच्छया या प्रवर्त्तते सा निर्धर्म्मकर्म्मप्रवृत्ता गृहस्य धर्मस्य चापद् ध्वंसकारणं निश्चयेन । यतः च्छुत्या भग्नाश्वासिता गृहाणि मुञ्चन्ति देवता भुवन–क्षेत्रदेवताप्रभृतयः शासनसुरा अपि गोमुखप्रभृतयो विधिसेवका अविधिप्रवृत्तौ मुञ्चन्तीत्यर्थः ॥ ७० ॥

**पडिकमणइ वंदणइ आउल्ली**
**चित्त धरंति करेइ असुली ।**
**मणह मज्झि नवकारु वि ज्झायइ**
**तासु सुट्ठु सम्मत्तु वि रायइ ॥ ७१ ॥**

[ प्रतिक्रमणे वन्दनके वाऽऽकुला
चित्ते धारयन्ती करोत्यसन्दिग्धा ।
मनोमध्ये नमस्कारमपि ध्यायति
तस्याः सुष्ठु सम्यक्त्वमपि राजते ॥ ७१ ॥ ]

सा रजस्वला प्रतिक्रमणे वन्दनके वा वचनाक्षराणि नोच्चारयतीत्यर्थः । चित्त एवाक्षराणि धारयन्ती करोति असन्दिग्धैव मनोमध्य एव नमस्कारमपि ध्यायति । ततस्तस्याः सुष्ठु सम्यक्त्वमपि शोभत इत्यर्थः ॥ ७१ ॥

**सावउ सावयछिंदइं[1] मग्गइ**
**तिणि सहु जुज्झइ धणबलि वग्गइ ।**
**अलिउ वि अप्पाणउं[2] सच्चावइ**
**सो समत्तु न केमइ पावइ ॥ ७२ ॥**

[ श्रावकः श्रावकच्छिद्राणि मृगयते
तेन सह युध्यते धनबलेन वलगते ।

१ क. छिड्डइं । २ क. °णउ ।

अलीकमप्यात्मानं सत्यापयति
स सम्यक्त्वं न कथमपि प्राप्नोति ॥ ७२ ॥ ]

श्रावक एव श्रावकान्तरस्य च्छिद्राणि गवेषयति, तेन सह युध्यते च धनबलेन वल्गते च राजकुलाद्युत्थापनेन। कदाचिद् राजकुलादौ व्यवहारे चालीकमप्यात्मानं सत्यापयति यः कश्चिदसौ सम्यक्त्वं कथमपि न प्राप्नोतीत्यर्थः ॥ ७२ ॥

**विकियवयणुं बुल्लइ नवि मिल्लइ**
**पर पभणंतु वि सच्चउं पिल्लइ ।**
**अट्ठ मयट्ठाणिहिं वट्टंतउ**
**सो सदिट्ठि न होइ न संतउ ॥ ७३ ॥**

[ विकृतवचनानि जल्पति न तु मुञ्चति
परं प्रभणन्तमपि सत्यं निराकरोति ।
अष्टसु मदस्थानेषु वर्तमानः
स सद्दृष्टिर्न भवति न सन् ॥ ७३ ॥ ]

विकृतवचनान्येव जल्पति, न तु मुञ्चत्यन्यं सत्यमपि भाषमाणं गलदर्दरेण निराकरोति। अष्टसु जात्यादिमदस्थानेषु वर्तमानो यः कश्चिदसौ न केवलं सद्दृष्टिर्न भवति सन्नपि शिष्टोऽपि न भवतीत्यर्थः ॥ ७३ ॥

**पर[2] अणत्थि घल्लंतु न संकइ**
**परधण-धणिय जु लेयण धंखइ[3] ।**
**अहियपरिग्गह-पावपसत्तउ**
**सो संमत्तिण दूरिण चत्तउ ॥ ७४ ॥**

[ परमनर्थे प्रक्षिपन् न शङ्कते
परधन-भार्यां यो ग्रहीतुमाकाङ्क्षति ।
अधिकपरिग्रह-पापप्रसक्तः
स सम्यक्त्वेन दूरेण त्यक्तः ॥ ७४ ॥ ]

अन्यं व्यसने प्रक्षिपन् न शङ्कते। परस्य धनं भार्यां च यो ग्रहीतुमाकाङ्क्षति। अधिके प्रभूते अत्यर्थं वा परिग्रहेण पापं तत्रासक्तः सोऽपि सम्यक्त्वेन दूरेण त्यक्त इत्यर्थः ॥ ७४ ॥

**जो सिद्धंत्तियजुत्तिहिं नियवरु**
**वाहि न जाणइँ करइ विसंवरु ।**

---

१ क. °यण। २ ग. परं। ३ क. धक्खइ। ४ क. °हि। ५ ख. ग. हि।

**कु वि केणइ कसायपूरियमणु**
**वसइ कुडुंबि[1] जं माणुसघणु ॥ ७५ ॥**

[ यः सिद्धान्तयुक्त्या निजगृहं
वाहयितुं न जानाति करोति विसंवरम् ।
कोऽपि केनचित् कषायपूरितमना
वसति कुटुम्बे यन्मानुषघने ॥ ७५ ॥ ]

यः सिद्धान्तयुक्त्या वक्ष्यमाणसमदृष्टिदर्शन–कोमलालापादिरूपया निजं गृहं प्रवर्त्तयितुं न जानाति, किन्तु करोति विसंवरं संवरणरहितं विसंस्थुलमित्यर्थः। यतः कोऽपि केनापि कषायेण लोभादिना पूरितमना वसति कुटुम्बे मानुष[2]प्रचुर इत्यथः ॥ ७५ ॥

**तसु सरूवु मुणि अणुवत्तिज्जइ**
**कु वि दाणिण कु वि वयणिण लिज्जइ ।**
**कुवि भएण करि पाणु धरिज्जइ**
**सगुणु जिट्ठु[3] सो पइ ठाविज्जइ ॥ ७६ ॥**

[ तस्य स्वरूपं ज्ञात्वाऽनुवर्त्यते
कोऽपि दानेन कोऽपि वचनेन लीयते ।
कोऽपि भयेन कृत्वा प्राणेन ( पाणौ ? ) धार्यते
सगुणो ज्येष्ठः स पदे स्थाप्यते ॥ ७६ ॥ ]

तस्य कुटुम्बपुरुषादेः स्वरूपं ज्ञात्वाऽनुवर्त्यते । कोऽपि दानेन, कोऽपि मधुरवचनेन गृह्यते । कोऽपि भयालुर्भयेन कृत्वा प्राणेन बलात्कारेण धार्यते । कुटुम्बे यश्च सगुणो ज्येष्ठः स पदे कुटुम्बादिवर्त्तनाधिकारे स्थाप्यत इत्यर्थः ॥ ७६॥

**जुट्ठह धिट्ठह न य पत्तिज्जइ**
**जो असत्तु तसुवरि दइ किज्जइ ।**
**अप्पा परह न लक्खाविज्जइ**
**नप्पा विणु कारणि खाविज्जइ ॥ ७७ ॥**

[ अलीकभाषिणां धृष्टानां नैव प्रतीयते
योऽसत्त्वस्तस्योपरि दया क्रियते ।
आत्मा परस्य न लक्ष्यतां नीयते
नात्मा विना कारणमुपयोज्यते ॥ ७७ ॥ ]

---

१ क. कुडंबि । २ ख. ग. °षे प्र° । ३ क. विद्वु ।

अलीकभाषिणां धृष्टानां च वचने नैव प्रत्ययं करोति। यश्चासमर्थो निःसत्त्वो वा तस्योपरि दया क्रियते। आत्मा कदाचिद् भीतो हृष्टो वा परस्य लक्ष्यतां न नीयते, कदाचिदपायसम्भवात्। न चात्मा विना कारणं विशेषलाभादिकं मन्त्रि-बलाधिपाद्यधिकारिणां वस्त्र-द्रव्यादिदानेनोपयोगं नीयत इत्यर्थः ॥ ७७ ॥

**माय-पियर जे धम्मि विभिन्ना**
**ति वि अणुवित्तिय हुंति ति धन्ना।**
**जे किर हुंति दीहसंसारिय**
**ते बुल्लंत न ठंति निवारिय ॥ ७८ ॥**

[ माता-पितरौ यौ धर्मे विभिन्नौ
तावप्यनुवर्तितौ भवतस्तौ धन्यौ।
ये किल भवन्ति दीर्घसंसारिण-
स्ते ब्रुवन्तो न तिष्ठन्ति निवारिताः ॥ ७८ ॥ ]

माता-पितरौ यौ विभिन्नधार्मिकौ तावप्यनुवर्त्तितौ सन्तौ तौ प्रसिद्धौ धन्यौ पुण्यभाजनं शुद्धधर्म्मविषयाभिमुखौ भवत इत्यर्थः। व्यतिरेकमाह—ये पुनः पित्रा-दयोऽपि दीर्घसंसारिणो भवन्ति, ते अनुवर्त्तिता अपि सन्तोऽसभ्यं भाषन्त एव, न च तिष्ठन्ति निवर्त्तिता अपीत्यर्थः ॥ ७८ ॥

**ताहि वि कीरइ इह अणुवत्तण**
**भोयण-वत्थ-पयाणपयत्तिण।**
**तह बुल्लंतहं[1] नवि रूसिज्जइ**
**तेहि समाणु विवाउ न किज्जइ ॥ ७९ ॥**

[ तेषामपि क्रियत इहानुवर्तना
भोजन-वस्त्रप्रदानैः प्रयत्नेन।
तथा ब्रुवतामपि नैव रुष्यते
तैः समं विवादो न क्रियते ॥ ७९ ॥ ]

तेषामपि भिन्नधार्म्मिकाणां संसारिणां क्रियत इहानुवर्त्तना भोजन-वस्त्रप्र-दानैः प्रयत्नेन दुष्प्रतीकारत्वात् तेषाम्। कदाचित् तु दुष्टमपि भाषमाणानां न रोषः क्रियते। तैः सह विवादो न क्रियते स्वयं विवेकित्वात् कृतज्ञत्वाच्चेत्यर्थः ॥ ७९ ॥

अथोपसंहरन्नुपदेशफलमाह—

**इय जिणदत्तुवएसरसायणु**
**इह-परलोयहं[2] सुक्खह भायणु।**

---

१ ख. ग. वुत्तंतह। २ क. °अह।

**कण्णंजलिहिं पियंति जि भव्वइं**
**ते हवंति अजरामर सव्वइं ॥ ८० ॥**

[ इति **जिनदत्तो**पदेशरसायनम्
इह–परलोकयोः सुखस्य भाजनम् ।
कर्णाञ्जलिभ्यां पिबन्ति ये भव्याः
ते भवन्त्यरामराः सर्वे ॥ ८० ॥ ]

**इत्युक्तन्यायेन जिनैर्दत्तो वितीर्णस्तीर्थकृदुपदिष्ट इत्यर्थः । अथवा 'जिनदत्त' इति प्रबन्धकर्त्तुरेव नाम । ततश्च स चासौ तस्य चोपदेशः शिक्षाविशेषः स एवात्यन्त माधुर्यादजरामरत्वहेतुत्वाच्च रसायनं सञ्जीवनहेत्वमृतद्रव्यरूपम् । इह–परलोकयोः सुखस्य भाजनं पात्रं तद्धेतुत्वात् कर्णाञ्जलिभ्यां पिबन्ति ये भव्यास्ते भवन्त्यजरामराः सर्वेऽपीत्यर्थः ॥ ८० ॥**

**इति युगप्रवरागमश्रीमज्जिनपतिसूरिशिष्यलेशविरचिता श्रीमज्जिनदत्तसूरि-सूत्रितोपदेशरसायनस्य संक्षिप्ततरा वृत्तिः समाप्ता ॥**

इति **जिनपतिसूरेः** शिष्यो रसायनसंत्पदं
किमपि किमपि व्याख्यां निन्ये निगूढमहार्थभृत् ।
**युग–नव–रवि**प्रख्ये वर्षे निदेशत आदृतः
सुकविपरिषन्नृत्यत्कीर्तेर्**जिनेश्वर**सद्गुरोः ॥ १ ॥
**जिनपाल** इति ख्यातो भक्तिमान् निजसद्गुरौ ।
तस्यैवानुग्रहाच्चैवं वृत्तिमाधादिमां तनुम् ॥ २ ॥
**शुभं भवतु सकलसङ्घस्य । ग्रंथाग्रं ४७९ ॥**

**उपदेशरसायनं समाप्तम् ।**

१ ग. सप्तत्यां

## जिनदत्तसूरिरचितं
## सूरप्रभोपाध्यायविहितवृत्तियुतं
# कालस्वरूपकुलकम् ।

वीरं प्रणम्य भवनीरधितीरमाप्तमाप्तोत्तमं हततमःप्रसरं नतानाम् ।
कालस्वरूपकुलकं जिनदत्तसूरिदृब्धं यथाश्रुतमहं विवृणोमि किञ्चित् ॥ १ ॥

**पणमवि वद्धमाणु जिणवल्लहु**
**परमप्पयलच्छिहिं जिणवल्लहु ।**
**सुगुरूवएसु देमि हउ भवह**
**सुक्खह कारणु होइ जु सवह ॥ १ ॥**

[ प्रणम्य **वर्धमानं जिनवल्लभं**
परमपदलक्ष्मा( क्ष्म्या ) जिनवल्लभम् ।
सुगुरूपदेशं ददाम्यहं भव्यानां
सौख्यानां कारणं भवति यः सर्वेषाम् ॥ १ ॥ ]

व्याख्या-प्रणम्य वर्द्धमानं वीरं जिना अवधिजिनादयः तेषां वल्लभं प्रियं परमपदलक्ष्मा जिनो नारायणस्तद्वद्वल्लभं भर्त्तारम् । सुगुरूपदेशं ददाम्यहं भव्यानां सौख्यानां कारणं हेतुर्भवति य उपदेशः सर्वेषाम् ॥ १ ॥

**मीण सणिच्छरंमि संकंतइ**
**मेसि जंति पुण वक्कु करंतइ ।**
**देस भग्ग परचक्क पइट्ठा**
**वड वड पट्टण ते पब्भट्ठा ॥ २ ॥**

[ मीने शनैश्चरे सङ्क्रान्ते
मेषे याति पुनर्वक्रं कुर्वति ।
देशा भग्नाः परचक्राणि प्रविष्टानि
बृहद्बृहत्पत्तनानि तानि प्रभ्रष्टानि ॥ २ ॥ ]

व्याख्या-मीनराशौ शनैश्चरे संक्रान्ते सति मेषराशौ च याति सति पुनर्वक्रं कुर्वति सति देशा भग्नाः परचक्राणि प्रविष्टानि । बृहद्बृहत्पत्तनानि तानि प्रभ्रष्टानि ॥ २ ॥

**विक्कमसवच्छरि सय बारह**
**हुयइ पणट्ठउ सुहु घर वारह ।**
**इह(य)संसारि सहाविण संतिहि**
**वत्तहि सुम्मइ सुक्खु वसंतिहि ॥ ३ ॥**

[ विक्रमसंवत्सरे शते द्वादशे
भूते प्रनष्टं सुखं गृहद्वारात् ।
इति संसारस्वभावेन सद्भिः
वार्ताभिः श्रूयते सौख्यं वसद्भिः ॥ ३ ॥ ]

व्या०—विक्रमसंवत्सरे द्वादशशतप्रमाणे भूते सति प्रनष्टं सुखं गृहद्वारात् । इति एवंविधेन संसारस्वरूपेण हेतुभूतेन सद्भिः साधुभिः वार्त्ताभिः श्रूयते सौख्यं वसद्भिः ॥ ३ ॥

**तह वि वत्त नवि पुच्छहि धम्मह**
**जिण गुरु मिल्लहि कज्जिण दम्मह।**
**फलु नवि पावहि माणुसजम्मह**
**दूरि होंति ति ज्जि सिवसम्मह ॥ ४ ॥**

[ तथापि वार्ता नैव पृच्छन्ति धर्मस्य
जिनान् गुरून् मुञ्चन्ति कार्ये द्रम्मस्य ।
फलं नैव प्राप्नुवन्ति मनुष्यजन्मनः
दूरे भवन्ति ते शिवशर्मणः ॥ ४ ॥ ]

व्या०—यद्यप्येवंविधं संसारस्वरूपं तथापि वार्त्तामपि न पृच्छन्ति धर्मस्य । तथा जिनान् , गुरून् मुञ्चन्ति कार्ये प्रयोजने द्रम्मस्य । ततः फलं न प्राप्नुवन्ति मनुष्यजन्मनः । ततो दूरीभवन्ति ते लोकाः ‘जिशब्दः पादपूरणे’ शिव-शर्मणः ॥ ४ ॥

कथं मनुष्यजन्मनः फलं न प्राप्नुवन्ति ?, एतदेव भावयन्नाह—

**मोहनिद जणु सुत्तु न जग्गइ**
**तिण उट्ठिवि सिवमग्गि न लग्गइ ।**
**जइ सुहत्थु कु वि गुरु जग्गावइ**
**तु वि तव्वयणु तासु नवि भावइ ॥ ५ ॥**

[ मोहनिद्रया जनः सुप्तो न जागर्ति
तेनोत्थाय शिवमार्गे न लगति ।
यदि सुहस्तः ( सुखार्थं, शुभार्थं ) कोऽपि गुरुर्जागरयाति
तथापि तद्वचनं तस्य नैव भाति ॥ ५ ॥ ]

व्या०—मोहनिद्रया सुप्तो जनो न जागर्त्ति । तेन कारणेनोत्थाय मोक्षमार्गे न लगति । यदि कश्चिद् गुरुः सुहस्तः शुभार्थं सुखार्थं वा जागरयति मोहनिद्रापगमेन प्रबोधयति, ततस्तद्वचो गुरुवचनं तस्य जनस्य नापि नैव भाति रोचत इत्यर्थः ॥ ५ ॥

इदानीं लघुकर्मणां गुरुवचनानुष्ठायिनां गुणमाह—

**परमत्थिण ते सुत्त वि जग्गहिं**
**सुगुरु–वयणि जे उट्ठेवि लग्गहिं ।**
**राग दोस मोह वि जे गंजहि**
**सिद्धि–पुरंधि ति निच्छइ भुंजहि ॥ ६ ॥**

[ परमार्थेन ते सुप्ता अपि जाग्रति
सुगुरुवचने ये उत्थाय लगन्ति ।
राग–द्वेष–मोहानपि येऽभिभवन्ति
सिद्धिपुरन्ध्रीं ते निश्चयेन भुञ्जते ॥ ६ ॥ ]

व्या०—परमार्थेन तत्त्वतः सुप्ता अपि द्रव्यनिद्रया, मोहनिद्राऽभावेन जाग्रति ये सुगुरुवचने उत्थाय लगन्ति तत्त्वबुद्धया सज्जन्ते आसक्ता भवन्तीत्यर्थः। किं पुनर्गुरुवचनसर्वस्वं किं वा तदनुष्ठानस्य परमं फलमित्याह–'रागेत्यादि' राग–द्वेष–मोहानपि अभिभवन्ति, ते सिद्धिपुरन्ध्रीं निश्चयेन भुञ्जते ॥ ६ ॥

इदानीं स्वयूथ्यसमुत्थमिथ्यात्वनिर्मन्थनायाह––

**बहु य लोय लुंचियसिर दीसहिं**
**पर राग–दोसिहिं सहुं विलसहिं ।**
**पढहिं गुणहि सत्थइ वक्खाणहि**
**परि परमत्थु तित्थु सु न जाणहि ॥ ७ ॥**

[ बहवो लोका लुञ्चितशिरसो दृश्यन्ते
परं राग–द्वेषाभ्यां सह विलसन्ति ।
पठन्ति गुणयन्ति शास्त्राणि व्याख्यानयन्ति
परं परमार्थस्तत्र तं न जानन्ति ॥ ७ ॥ ]

व्या०—बहवो लोका लुञ्चितशिरसो दृश्यन्ते, परं राग-द्वेषाभ्यां सह विलसन्ति विहरन्ति । पठन्ति गुणयन्ति शास्त्राणि व्याख्यानयन्ति, परं परमार्थो यस्तत्र शास्त्रे तं न जानन्ति विरतिहीनत्वेन तत्फलाभावात् ॥ ७ ॥

**तिणि वेसिणि ते चोर रिहिल्लिउ**
**मुसहि लोउ उम्मग्गिण घल्लिउ ।**
**ताहं पमत्तउ किवइ न छुट्टइ**
**जो जग्गइ सद्धम्मि सु वट्टइ ॥ ८ ॥**

[ तेन वेषेण ते चौराः स्थिता
मुष्णन्ति लोकमुन्मार्गे क्षिप्त्वा ।
तेभ्यः प्रमत्तः कथमपि न मुच्यते
यो जागर्त्ति सद्धर्मे स वर्तते ॥ ८ ॥ ]

व्या०–तेन वेषेण साधुसम्बन्धिना उपलक्षिताश्चौराः स्तेनास्ते तत्त्वतो लोकमोषणपरत्वाद् वेषस्याकिञ्चित्करत्वात् विप्रतार्य मुष्णन्ति लोकमुन्मार्ग्गे क्षिप्त्वा तेभ्यो लिङ्गिभ्यः प्रमत्तो धर्म्माधर्मविचाराचतुरतया निरवधानः कथमपि न छुट्टति न मुच्यते तद्ग्रास्यो भवतीत्यर्थः । यो जागर्ति धर्माधर्मविचारचातुर्येण सावधानो भवति सद्धर्मे स एव वर्त्तते ॥ ८ ॥

**ते वि चोर गुरु किया सुबुद्धिहि**
**सिववहुसंगमसुहरसलुद्धिहि ।**
**ताहि वि खावहि अप्प–उपासह**
**छुट्टइ कह वि न जिंव भवपासह ॥ ९ ॥**

[ तेऽपि चौरा गुरवः कृताः स्वबुद्धिभिः
शिववधूसङ्गमसुखरसलुब्धैः ।
तेषामपि खादयन्त्यात्मोपासकानां
छुटति कथमपि न यथा भवपाशात् ॥ ९ ॥ ]

व्या०––तेऽपि चोरा गुरवः कृता आगमासंस्कृताभिर्निजमतिभिः शिववधूसङ्गमसुखरसलुब्धैः । तेषामपि पार्श्वादात्मानं खादयन्ति। आत्मीयभोजनादिवस्तूपयोगेन छुटति मुच्यते कथमपि न यथा भवपाशात् संसारसम्बन्धात् ॥ ९ ॥

इदानीं बाह्याकारभेदेन विशेषमनुपलक्षयतो मुग्धस्य विशेषप्रतिपत्त्यर्थमाह–

**दुद्धु होइ गो–यक्किहि धवलउ**
**पर पेज्जंतइ अंतरु बहलउ ।**

एक्कु सरीरि सुक्खु संपाडइ
अवरु पियउ पुणु मंसु वि साडइ ॥ १० ॥

[ दुग्धं भवति गोऽर्कयोर्धवलं
परं पीयमानेऽन्तरं बहलम् ।
एकं शरीरे सौख्यं सम्पादयति
अपरं पीतं पुनर्मांसमपि शातयति ॥ १० ॥ ]

व्या०—दुग्धं भवति गोऽर्कयोर्धवलं शुभ्रं परं पीयमाने तस्मिन् अन्तरं विशेषो बहलं महत् । तदेवाह–एकं गोक्षीरं शरीरे सौख्यं सम्पादयति । अपरं अर्कदुग्धं पीतं सत् पुनर्मांसमपि शातयति, आस्ताम् अक्षिमान्द्यादिकमनर्थान्तरमित्यपेरर्थः ॥ १० ॥

एतदेव व्यनक्ति—

कुगुरु सुगुरु सम दीसहिं बाहिरि
परि जो कुगुरु सु अंतरु वाहि रि ! ।
जो तसु अंतरु करइ वियक्खणु
सो परमप्पउ लहइ सुलक्खणु ॥ ११ ॥

[ कुगुरु-सुगुरू समौ दृश्येते बहिः
परं यः कुगुरुः स आन्तरो व्याधी रे ! ।
यस्तयोरन्तरं करोति विचक्षणः
स परमपदं लभते सलक्षणः ॥ ११ ॥ ]

व्या०—कुगुरु–सुगुरू समौ तुल्यौ दृश्येते बहिः, परं यः कुगुरुः स आन्तरो व्याधिः 'रे' इति सम्बोधने । यस्तयोः कुगुरु–सुगुर्वोरन्तरं विशेषं करोति विचक्षणः; स परमपदं मोक्षपदं लभते सलक्षणः सह लक्षणैः सामुद्रिकादिभिर्वर्त्तते ॥ ११ ॥

यः कुगुरु–सुगुर्वोरन्तरं न करोति, तस्य दृष्टान्तेन दोषमाह—

जो धत्तूरयफुल्लु समुज्जलु
पिक्खिवि लग्गउ तित्थु समुज्जलु ।
जइ सो तसु रसु पियणह इच्छइ
ता जगु सव्वु वि सुन्नउ पिच्छइ ॥ १२ ॥

[ यो धत्तूरपुष्पं समुज्ज्वलं
प्रेक्ष्य लग्नस्तत्र समुज्जडः ।

यदि स तस्य रसं पातुमिच्छति
तदा जगत् सर्वमपि शून्यं( सुवर्णं ) पश्यति ॥ १२ ॥]

व्या०—यो धत्तूरकपुल्लं(ष्पं) समुज्ज्वलं निर्मलं प्रेक्ष्य लग्नस्तत्र पुष्पे समुत् सहर्षो जडो मूर्खः । यदि स जडस्तस्य पुष्पस्य रसस्तं पातुमिच्छति ततो जगत् सर्वं सुवर्ण्णं पश्यति । यदि कुगुरुधत्तूरकवचनरसं पिबति साभिलाषं शृणोति तत्त्वबुद्ध्या प्रतिपद्यत इति यावत् । तदा स सर्वं जगत् शून्यं पश्यति नास्तिकदृष्टिरिव प्रतिपद्यत इत्यर्थः । कुगुरवो हि स्वयं नष्टाः परानपि नाशयन्तीति तात्पर्यार्थः ॥ १२ ॥

इदानीं सुगुरूपदेशविवेकिनां भव्यानां विशेषेण चेतसि निवेशिते तथा प्रतिपादयन्नाह—

**इय मणुयत्तु सुदुल्लहु लद्धउ**
**कुल–बल–जाइ–गुणेहिं समिद्धउ ।**
**दस दिट्ठंत इत्थ किर दिन्ना**
**इहु निप्फलु ता नेहु म धन्ना ॥ १३ ॥**

[ इति मनुजत्वं सुदुर्लभं लब्धं
कुल–बल–जाति–गुणैः समृद्धम् ।
दश दृष्टान्ता अत्र किल दत्ता
इति निष्फलं तस्मान्नैष्ट मा धन्याः ! ॥ १३ ॥ ]

व्या०—इति मनुजत्वं दुर्लभं लब्धं कुल-बल-जाति-गुणैः समृद्धं सम्पन्नम् । दश दृष्टान्ता अत्र मनुजत्वदुर्लभत्वे दत्ता इति हेतोर्निष्फलं मोघं ता तस्मान्मा नैष्ट धन्याः ! ॥ १३ ॥

न च नरत्वमात्रं कार्यकारीत्याह—

**लद्धिं नरत्ति अणारियदेसेहिं**
**को गुणु तह विणु सुगुरुवएसिहि ? ।**
**आरियदेस जाइ–कुलजुत्तउ**
**काइ करेइ नरत्तु वि पत्तउ ? ॥ १४ ॥**

[ लब्धे नरत्वेऽनार्यदेशेषु
को गुणस्तथा विना सुगुरूपदेशम् ( °शैः ) ।
आर्यदेशे जाति–कुलयुक्तं
किं करोति नरत्वमपि प्राप्तम् ? ॥ १४ ॥ ]

व्या०--लब्धे नरत्वेऽनार्यदेशेषु को गुणः ?, तत्र अनार्यदेशेषु विना सुगुरूपदेशम् । आर्यदेशेऽपि जाति-कुलयुक्तं किं करोति नरत्वमपि प्राप्तम् ?॥ १४॥

जहि किर आउ होइ संखित्तउ
तित्थु न कज्जु पसाहइ वुत्तउ ।
तं पि बहुत्तु होइ जइ पुन्निहि
जित्थु गुरुत्तु सुणिज्जइ कंनिहि ॥ १५ ॥

[ यत्र किलायुर्भवति संक्षिप्तं
तत्र न कार्यं प्रसाधयत्युक्तम् ।
तदपि प्रभूतं भवति यदि पुण्यैः
यत्र गुरूक्तं श्रूयते कर्णाभ्याम् ॥ १५ ॥ ]

व्या०—यत्र किल नरत्वे आयुर्जीवितं संक्षिप्तं भवति, तत्र नरत्वे न कार्यमुक्तं सिद्धान्तप्रतिपादितं ज्ञान-दर्शन-चारित्राराधनादिकं न प्रसाधयति । तदपि आयुः प्रभूतं भवति, यदि पुण्यैः । यत्र प्रभूते आयुषि सति गुरूक्तं श्रूयते कर्णाभ्याम् ॥ १५ ॥

उत्तरोत्तरयोगं गुणसाधनमाह—

सद्दहाणु तव्वयणु सुणंतह
विरला कसु वि होइ गुणवंतह ।
पढहिं गुणहि सिद्धंतु बहुत्तइ
सद्दहाणु पर नत्थि जिणोत्तइ ॥ १६ ॥

[ श्रद्धानं तद्वचनं शृण्वतो
विरलस्य कस्यापि भवति गुणवतः ।
पठन्ति गुणयन्ति सिद्धान्तं प्रभूताः
श्रद्धानं परं नास्ति जिनोक्ते ॥ १६ ॥ ]

व्या०—श्रद्धानं तद्वचनं गुरूक्तं शृण्वतो विरलस्य कस्यापि भवति गुणवतः । एतदेव व्यतिरेकेणाह–पठन्ति गुणयन्ति सिद्धान्तं प्रभूताः, श्रद्धानं परं नास्ति जिनोक्ते ॥ १६ ॥

एतदेव विशेषेणाह—

अविहि पयट्टहि विहिपरु दूसहि
पडिउ पवाहि लोउ सु पसंसहि ।
अणुसोयह पडिसोयह अंतरु
न कुणहि खवणय जेव निरंतरु ॥ १७ ॥

[ अविधिना प्रवर्तन्ते विधिपरान् दूषयन्ति
पतितं प्रवाहे लोकं ते प्रशंसन्ति ।
अनुस्रोतसः प्रतिस्रोतसोऽन्तरं
न कुर्वन्ति क्षपणक इव निरन्तरम् ॥ १७ ॥ ]

व्या०—अविधिना प्रवर्त्तन्ते, विधिपरान् भव्यान् दूषयन्ति । पतितं प्रवाहेऽनुस्रोतोमार्ग्गरूपे लोकं प्रशंसन्ति । अनुस्रोतसः सकाशात् प्रतिस्रोतसो विशेषं न कुर्वन्ति । किन्तु क्षपणक इव निरन्तरं अन्तरस्याभावो निरन्तरं विशेषाभावं कुर्वन्ति । क्षपणकपक्षे निरन्तरं अन्तराभावं अन्तरायव्यपगममिति यावत् ॥ १७ ॥

इदानीं मन्दमेधसां विपर्यस्तत्वं दर्शयन्नाह--

**करिवि जिणोत्ति धम्मि जण लग्गा**
**दूरिण जंति सुगुरु-सुइभग्गा ।**
**विहिपह-पक्खइ जिणु मुणिं वंदहि**
**तं मग्गट्ठिउ जणु अहिणंदहि ॥ १८ ॥**

[ कृत्वा जिनोक्तं धर्मे जना लग्ना
दूरेण यान्ति सुगुरु-श्रुतिभग्नाः ।
विधिपथपक्षे ( ? ) जिनं मुनिं वन्दन्ते
तन्मार्गस्थितं जनमभिनन्दयन्ति ॥ १८ ॥ ]

व्या०-जिनोक्तमिति कृत्वा धर्मे जना लग्नाः । दूरेण यान्ति सुगुरु-श्रुति-आगमश्रवणभग्नाः विधिपथपार्थक्ये वर्तमानान् जिनमुनीन् वन्दन्ते तन्मार्गस्थितं जनमभिनन्दन्ति बहु मन्यन्ते ॥ १८ ॥

**जमणाययणु जिणेहि निदंसिउ**
**तं वंदहि बहुलोयनमंसिउ ।**
**जे रयणित्थि लोय ते थोवा**
**अइसउ न मुणवि अंतरु धोवा ॥ १९ ॥**

[ यदनायतनं जिनैर्दर्शितं
तं वन्दन्ते बहुलोकनमस्कृतम् ।
ये रत्नार्थिनो लोकास्ते स्तोका
ईदृशं न जानन्त्यन्तरं मूर्खाः ॥ १९ ॥ ]

व्या०—यदनायतनं जिनैर्दर्शितं तं वन्दन्ते बहुलोकनमस्कृतम्। ये रत्नार्थिनो लोकास्ते स्तोकाः, ईदृशमन्तरं विशेषं न जानन्ति थोया मूर्खाः ॥ १९ ॥

**पारतंतु विहिविसउ न बुज्झहि**
**जो परियाणइ तिणि सहु जुज्झहिं ।**
**सो भसम्मग्गहगहिउ निरुत्तउ**
**दसमच्छेरएण सो भुत्तउ ॥ २० ॥**

[ पारतन्त्र्यं विधिविषयं न बुध्यते
यः परिजानाति तेन सह युध्यते ।
स भस्मग्रहगृहीतो निरुक्तं
दशमाश्चर्येण स भुक्तः ॥ २० ॥ ]

व्या०—पारतन्त्र्यं विधिमागमाज्ञां विषयं गोचरं गुणवत्पात्रं न बुध्यते यः परिजानाति । कोऽर्थः ? पारतन्त्र्यादिकं बुध्यते, तेन सह युध्यते स पूर्वोक्तः पारतन्त्र्याद्यनभिज्ञस्तदभिज्ञयोधे च भस्मग्रहगृहीतो निरुक्तं निश्चितं दशमाश्चर्येणासंयतपूजाख्येन स भुक्तो ग्रस्तः ॥ २० ॥

**अहह ! हुंड अवसप्पिणि दुट्ठी**
**जह असंजयपूई पयट्ठी ।**
**तासु वि दूसम जाय सहाइणि**
**जवस हूय पय पावह भाइणि ॥ २१ ॥**

[ अहह ! हुण्डावसर्पिणी दुष्टा
यस्यामसंयतपूजा प्रविष्टा ।
तस्या अपि दुःषमा जाता सहायिनी
यद्वशाद् भूता प्रजा पापस्य भागिनी ॥ २१ ॥]

व्या०—'अहहेति खेदे' हुण्डावसर्पिणी दुष्टा, यस्यामसंयतपूजा प्रविष्टा । तस्या अपि दुःखँ( ष )मा सहायिनी जायते साहाय्यकारिणी सम्पद्यते । यद्वशात् प्रजा भूता पापभागिनी ॥ २१ ॥

**तह वि जहन्न वीस जा विरूई**
**ताण पयट्ठ गुणह गरुई ।**
**तासु अंति संवच्छर जि हुया**
**खउ पाविय पय पुण तहि बहुया ॥ २२ ॥**

[ तथापि जघन्यविंशतिर्या विरूपा
तासां प्रविष्टा गुणानां गुर्वी ।

तस्या अन्ते संवत्सरा ये भूताः
क्षयं प्राप्ताः प्रजाः पुनस्तत्र प्रभूताः ॥ २२ ॥ ]

व्या०-तथा जघन्यविंशतिरपि विरूपा जाता। तासां दुःखँमासंयतपूजा जघन्यविंशतीनां प्रविष्टा सती गुणानां प्रतिष्ठा गुर्व्वी गता प्रलीना । तस्या जघन्यविंशतेरन्ते प्रान्ते ये संवत्सरा भूताः, क्षयं प्राप्ताः प्रजास्तेषु संवत्सरेषु प्रभूताः ॥ २२ ॥

पुनर्विशेषोपदेशमाह्--

**ईसर धम्म-पमत्त जि अच्छहि**
**पाउ करेवि ति कुगइहिं गच्छहिं ।**
**धम्मिय धम्मु करंति जि मरिसिहि**
**ते सुहु सयलु मणिच्छिउ लहिसिहिं ॥ २३ ॥**

[ ईश्वरा धर्मप्रमत्ता ये आसते
पापं कृत्वा ते कुगतौ गच्छान्ति ( गमिष्यन्ति ) ।
धार्मिका धर्मं कुर्वन्तो ये मरिष्यन्ति
ते सुखं सकलं मनईप्सितं लप्स्यन्ते ॥ २३ ॥ ]

व्या०-ईश्वरा धर्मप्रमत्ता ये आसते, पापं कृत्वा ते कुगतौ गच्छन्ति । धार्मिका धर्मं कुर्वन्तो ये मरिष्यन्ति, ते सुखं सकलं मनईप्सितं लप्स्यन्ते ॥ २३ ॥

**पुन्नवंत विहिधम्मि जि लग्गहिं**
**ते परमात्थिण जीवहि जग्गहिं ।**
**अप्पु समप्पहि ते न पमायह**
**इह-परलोइ वि विहियावायह ॥ २४ ॥**

[ पुण्यवन्तो विधिधर्मे ये लगन्ति
ते परमार्थेन जीवन्ति जाग्रति ।
आत्मानं समर्पयन्ति ते न प्रमादस्य
इह परलोकेऽपि विहितापायस्य ॥ २४ ॥ ]

व्या०-पुण्यवन्तो विधिधर्मे ये लगन्ति, ते परमार्थेन जीवन्ति जाग्रति । आत्मानं न समाय (०मर्प)यन्ति ते प्रमादस्य इह-परलोकेऽपि विहितापायस्य ॥२४॥

**तुम्हह इहु पहु चाहिलि दंसिउ**
**हियइ बहुत्तु खरउ वीमंसिउ ।**
**इत्थु करेज्जहु तुम्हि सयायरु**
**लीलइ जिव तरेहु भवसायरु ॥ २५ ॥**

[ युष्माकमेष पन्थाश्चाहिलेन दर्शितो
हृदये प्रभूतं खरं विमर्श्य ( ०मर्शितः ) ।
अत्र कुर्यात यूयं सदाऽऽदरं
लीलया यथा तरथ भवसागरम् ॥ २९ ॥ ]

व्या०–युष्माकं यशोदेवाभू-आसिग-सम्भवानां एष पन्थाश्चाहिलेन युष्मत्पित्रा दर्शितः । अथ च चाहिलिकोऽर्थो वीक्ष्य सन्मार्गपरीक्षणेन हृदये बहु प्रभूतं खरमत्यर्थं विमर्श्य अत्र सन्मार्गे कुर्यात यूयं सदा सर्वदा आदरं प्रयत्नं लीलया यथा तरथ भवसागरम् । किलाणहिलपाटकपत्तने चाहिलनामा श्रावको धर्मार्थी विचारचातुरीचञ्चुरभूत् । तस्य च चत्वारः पुत्रा बभूवुः । तद्यथा–यशोदेवः, अद्भुत आभू इति प्रसिद्धः, आसिगः, सम्भवश्चेति । तेन च चाहिलेन धर्म–गुरुपरीक्षापरायणेन प्रभुश्रीजिनदत्तसूरयो धर्म्माचार्यतया प्रतिपन्नाः । ते च तत्पुत्राः पित्राज्ञारता अपि धर्मज्ञा अपि कालदोषात् युतभावं कर्तुमीषुः । स च चाहिलस्तथा गुणमनीक्षमाणः पुत्राणां शिक्षाप्रदिदापयिषया तथाविधस्वरूपगर्भां विज्ञप्तिकां प्रभुश्रीजिनदत्तसूरीणां प्रेषयामास । ततस्तैरपि करुणासुधासमुद्रैस्तेषामुपचिकीर्षया एवंविधधर्मदेशनागर्भः प्रतिलेखः प्रेषितः । ततस्ते एतदनुसारेण प्रवर्त्तमाना विविधमानृधुः, विधिधर्मं चाराधयामासुरिति ॥ २५ ॥

**जहिं घरि बंधु जुय जुय दीसइं**
**तं घरु पडइ वहंतु न दीसइ ।**
**जं दढबंधु गेहु तं बलियउ**
**जडि भिज्जंतउ सेसउ गलिउ ॥ २६ ॥**

[ यस्मिन् गृहे बन्धवो युतयुता दृश्यन्ते
तद् गृहं पतति वहन्न दृश्यते ।
यद् दृढबन्धं गेहं तद् बलिकं
जडे(ले) भिद्यमाने शेषं गलितम् ॥ २६ ॥ ]

व्या०–यस्मिन् गृहे बन्धवो युतयुताः पृथग्भूता दृश्यन्ते, तद् गृहं पतति । वहन्नव्यवच्छेदेन वर्त्तमानं न दृश्यते यद् दृढबन्धं सस्नेहबान्धवं गेहं तद् बलिकं बलवत् । जडे तद्गेहसम्बन्धिनि मूर्खे भिद्यमाने मन्दस्नेहतया पृथग् भवति सति शेषं गृहं गृहवास्तव्यलोकं गलितं भ्रष्टम् । द्वितीयोऽर्थः––यत्र गेहे बन्धाः संयमनानि त्रुटितानि दृश्यन्ते । तद् गेहं वहदवतिष्ठमानं न दृश्यते । यद् दृढबन्धं तद् बलिकं जडे पानीये भिद्यमाने गलति सशेषं गेहं गलितं भ्रष्टमेव ॥ २६ ॥

एकत्वे गुणमाह--

**कज्जउ करइ बुहारी बद्धी**
**सोहइ गेहु करेइ समिद्धी ।**
**जइ पुण सा वि जुयं जुय किज्जइ**
**ता किं कज्ज तीए साहिज्जइ ? ॥ २७ ॥**

[ कार्यकं करोति बहुकरी बद्धा
शोध(भ)यति गेहं करोति समृद्धिम् ।
यदि पुनः साऽपि युतयुता क्रियते
ततः किं कार्यं तया साध्यते ? ॥ २७ ॥ ]

**व्या०—कार्यकं पुञ्जकं करोति बहुकरी प्रमार्जनी बद्धा शोधयति शोभयति वा गेहं करोति समृद्धिम् । यदि पुनः साऽपि युतयुता पृथग्भूतैकैकतृणा क्रियते, ततः किं कार्यं तया साध्यते निष्पाद्यते ? न किञ्चित् । एवमेव कुटुम्बवासे उपनयो योज्यः ॥ २७ ॥**

माता-पित्रादिभक्तस्य गुणमाह—

**पुणवसु हत्थि चडइ सो चित्तह**
**सोमु सूरु पुत्तु वि मावित्तह ।**
**जो किर चित्तह मज्झि न पविसइ**
**जेट्ठह मूलि सु कहि किव होसइ ? ॥ २८ ॥**

[ पुनर्वसु हस्ते चटति सौचित्यस्य ( स चित्रायाः )
सौम्यः(मः) शू(सू)रः पुत्रोऽपि माता-पित्रोः ।
यः किल चित्तस्य ( चित्राया ) मध्ये न प्रविशति
ज्येष्ठानां(या) मूले स कथय कथं भविष्यति ? ॥ २८ ॥ ]

**व्या०— पुनर्भूयोऽपि वसु द्रव्यं हस्ते करे चटति आरोहति सौचित्यस्य उचितवृत्तिप्रधानस्य । सौम्यः प्रशान्तात्मा सूरस्तेजस्वी पुत्रस्तनयः स चित्ते माता-पित्रोरपि आस्तामन्यस्य प्रायः सर्वस्य गुणप्रियत्वात् । यः किल चित्तमध्ये न प्रविशति चित्तं नावर्ज्जयति माता-पित्रादीनां ज्येष्ठानां महतां पुरुषाणां मूले आदौ स कथय त्वमेव ब्रूहि कथं भविष्यति न कथञ्चित् उपायाभावात्, जनानुरागप्रभवत्वात् सम्पदाम् । अन्यः प्रतीयमानोऽर्थः–पुनर्वस्वोस्तारकयोर्हस्ते चटति चित्रायां सोमश्चन्द्रः, सूरः सूर्यः, पुत्रोऽपि सोमस्य बुधः, सूरस्य शनिः, 'मावित्तह'त्ति विशाखासु यः किल चित्रामध्ये न प्रविशति । ज्येष्ठायां मूले च स कथय कथं भविष्यति ? न कथञ्चित्, पूर्वानारोहे उत्तरानारोहात् । तदयमत्र तात्पर्यार्थः—ग्रहा अपि क्रमेणैव नक्षत्राण्यारोहन्ति, नाक्रमेण; अनेनैव दृष्टान्तेन पुरुषा अपि क्रमेणैव सम्पदमारोहन्ति, नाक्रमेण । अतो न तदप्राप्तौ यथाकथञ्चिदाकुलत्वं युज्यत इति भावः ॥ २८ ॥**

लोहिण जडिउ जु पोउ स फुट्टइ
चुंबुकु जहि पहाणु किव वट्टइ ? ।
नेय समुद्दह पारु सु पावइ
अंतरालि तसु आवय आवइ ॥ २९ ॥

[ लोहे(भे)न जडितो यः पोतः स स्फुटति
चुम्बको यत्र पाषाणः कथं वर्तते ? ।
नैव समुद्रस्य पारं स प्राप्नोति
अन्तराले तस्यापदागच्छति ॥ २९ ॥ ]

व्या०–लोहेन जडितः पोतो यः स स्फुटति । यत्र पोते चुम्बको लोहाकर्षणकारी पाषाणो भवति, स पोतः कथं वर्त्तते ? न कथञ्चिद् भजत इत्यर्थः । नैव समुद्रस्य पारं स पातः प्राप्नोति अन्तराले अन्तरे तस्य पोतस्य आपदागच्छति । द्वितीयपक्षे–लोभेन चतुर्थकषायेन जडितो ग्रस्तः पोतः संसारसमुद्रनिस्तारकारणतया गुरुर्यः स स्फुटति गुरुगुणैर्वियुक्तत्वात् लाघवं प्राप्नोति । यत्र च गुरौ चुम्बकोऽनवस्थितः साधुः प्रधानं स गुरुः कथं वर्त्तते ? न कथञ्चित् । अपि तु स्तोकदिनैरेव विशृङ्खलीभवति नैव संसारसमुद्रपारं स गुरुः प्राप्नोति । अन्तरालेऽन्तरे तस्य गुरोरापदागच्छति ॥ २९ ॥

लोहिण रहिउ पोउ गुरुसायरु
दीसइ तरंतु जइ वि जडवायरु ।
लाहउ करइ सु पारु वि पावइ
वाणियाह धणरिद्धि वि दावइ ॥ ३० ॥

[ लोहे( भे )न रहितः पोतो गुरुसादरः ( गुरुः सागरे )
दृश्यते तरन् यद्यपि जडवादरः ( वातः ) ।
लाभं करोति स पारमपि प्राप्नोति
वणिजानां धनऋद्धिमपि दर्श( दाप )यति ॥ ३० ॥ ]

व्या०–लोभेन रहितो गुरुः पोतः प्रवहणसदृशः सागरं संसारसागरं तरन् दृश्यते । यद्यपि जडवादरः जडैर्मूर्खैरधर्मज्ञैर्वादरो व्याकुलः । लाभं ज्ञानादिलाभं करोति स गुरुपोतः पारमपि प्राप्नोति प्रापयति च । वणिजां वाणिजानां वणिज एव वाणिजा धर्मधनलाभार्थिनः तेषां धर्मधनऋद्धिमपि दर्शयति । द्वितीयपक्षे पोतः प्रवहणं, गुरुर्महान् लोहेन रहितः, सागरं समुद्रं तरन् वणिजां धनऋद्धिमपि दर्शयति परपारलाभजनिताम् ॥ ३० ॥

जो जणु सुहगुरु-दिट्ठिहि दिट्ठउ
तसु किर काइ कारइ जसु रुट्ठउ ? ।
जसु परमेट्ठि-मंतु मणि निवसइ
सो दुहमज्झि कया वि न पइसइ ॥ ३१ ॥

[ यो जनः शुभगुरुदृष्ट्या दृष्टः
तस्य किल किं करोति यमो रुष्टः ? ।
यस्य परमेष्ठिमन्त्रो मनसि निवसति
स दुःखमध्ये कदापि न प्रविशति ॥ ३१ ॥ ]

व्या०–प्रकृतोऽर्थः प्रकटः । द्वितीयस्तु किञ्चिदुच्यते । यः किल शुभगुरुदृष्ट्या ज्योतिःशास्त्रोक्तशोभनस्थानवर्त्तिनो गुरोर्बृहस्पतेर्दृष्ट्या दृष्टो लग्नद्वारेण, तस्य किं करोति यमः शनैश्चरः द्वादशजन्मद्वितीयादिस्थानस्थः ? ॥ ३१ ॥

इदानीमुपसंहरति—

**इय जिणदत्तुवएसु जि निसुणहि**
**पढहि गुणहि परियाणवि जि कुणहि ।**
**ते निव्वाण–रमणी सहु विलसहि**
**वलिउ न संसारिण सहु मिलिसिहिं ॥ ३२ ॥**

[ इति **जिनदत्तो**पदेशं ये निशृण्वन्ति
पठन्ति गुणयन्ति परिज्ञाय ये कुर्वन्ति ।
ते निर्वाणरमण्या सह विलसन्ति
वलित्वा न संसारेण सह मिलिष्यन्ति ॥ ३२ ॥ ]

**कालस्वरूपकुलकं समाप्तमिति ।**

व्या०—इति पूर्वोक्तेन प्रकारेण जिनैरर्हद्भिर्दत्तो वितीर्णो य उपदेशः कृत्याकृत्यविधिनिषेधरूपस्तम् । अथ च जिनदत्तसूरिरिति कवेर्नाम । ये निशृण्वन्ति नियमेनाकर्णयन्ति, पठन्ति अधीयते, गुणयन्ति अभ्यस्यन्ति, परिज्ञाय विदित्वा ये कुर्वन्ति अनुतिष्ठन्ति; ते निर्वाणरमण्या मुक्तिकान्तया सह विलसन्ति क्रीडन्ति । वलित्वा व्याघुट्य न संसारेण सह मिलिष्यन्ति संगंस्यन्ते भव–तरुबीज-कर्माभावादिति भावः ॥ ३२ ॥

**सूरप्रभो**ऽभिषेकः श्री**जिनपतिसूरि**पदकमलभृङ्गः ।
व्यावृत द्वात्रिंशतमल्पमेधसां किमपि बोधाय ॥ १ ॥

**कालस्वरूपकुलकं** व्याख्याय यदर्जितं मया पुण्यम् ।
तेनास्तु भव्यलोकः सकलोऽपि **विधि**प्रबोधरतः ॥ २ ॥

**इति कालस्वरूपकुलकविवरणं समाप्तम् ॥३॥**

# परिशिष्टम् ।

श्रीजिनवल्लभसूरिविरचितः

## सङ्घपट्टकः ।

वह्निज्वालावलीढं कुपथमथनधीर्मातुरस्तोकलोक-
स्याग्रे सन्दर्श्य नागं कमठमुनितपः स्पष्टयन् दुष्टमुच्चैः ।
यः कारुण्यामृताब्धिर्विधुरमपि किल स्वस्य सद्यः प्रपद्य
प्राज्ञैः कार्यं कुमार्गस्खलनमिति जगादेव देवं स्तुमस्तम् ॥ १ ॥

कल्याणाभिनिवेशवानिति गुणग्राहीति मिथ्यापथ-
प्रत्यर्थीति विनीत इत्यशठ इत्यौचित्यकारीति च ।
दाक्षिण्यीति दमीति नीतिभृदिति स्थैर्यीति धैर्यीति सद्-
धर्मार्थीति विवेकवानिति सुधीरित्युच्यसे त्वं मया ॥ २ ॥

इह किल कलिकालव्यालवक्त्रान्तराल-
स्थितजुषि गततत्त्वप्रीतिनीतिप्रचारे ।
प्रसरदनवबोधप्रस्फुरत्कापथौघ-
स्थगितसुगतिसर्गे सम्प्रति प्राणिवर्गे ॥ ३ ॥

प्रोत्सर्पद्भस्मराशिग्रहसखदशमाश्चर्यसाम्राज्यपुष्य-
न्मिथ्यात्वध्वान्तरुद्धे जगति विरलतां याति जैनेन्द्रमार्गे ।
संक्लिष्टद्विष्टमूढप्रखलजडजनाम्नायरक्तैर्जिनोक्ति-
प्रत्यर्थी साधुवेषैर्विषयिभिरभितः सोऽयमप्राथि पन्थाः ॥ ४ ॥

अ(य)त्रौद्देशिकभोजनं जिनगृहे वासो वसत्यक्षमा
स्वीकारोऽर्थगृहस्थयचैत्यसदनेष्वप्रेक्षिताद्यासनम् ।
सावद्याचरितादरः श्रुतपथावज्ञा गुणिद्वेषधी-
र्धर्मः कर्महरोऽत्र चेत् पथि भवेन्मेरुस्तदाऽब्धौ तरेत् ॥ ५ ॥

षट्कायानुपमृद्य( मर्द्य ) निर्दयमृषीनाधाय यत् साधितं
शास्त्रेषु प्रतिषिध्यते यदसकृन्निस्त्रिंशताधायि यत् ।
गोमांसाद्युपमं यदाहुरथ यद् भुक्त्वा यतिर्यात्यध-
स्तत् को नाम जिघत्सतीह सघृणः सङ्घादिभक्तिं विदन् ॥ ६ ॥

गायद्गन्धर्वनृत्यत्पणरमाणिरणद्वेणुगुञ्जन्मृदङ्ग-
प्रेङ्खत्पुष्पस्रगुद्यन्मृगमदलसदुल्लोचचञ्चज्जनौघे ।

देवद्रव्योपभोगध्रवमठपतिताऽऽशातनाभ्यस्त्रसन्तः
सन्तः सद्भक्तियोग्ये न खलु जिनगृहेऽर्हन्मतज्ञा वसन्ति ॥ ७ ॥

साक्षाज्जिनैर्गणधरैश्च निषेवितोक्तां
निःसङ्गताग्रिमपदं मुनिपुङ्गवानाम् ।

शय्यातरोक्तिमनगारपदं च जानन्
विद्वेष्टि कः परगृहे वसतिं सकर्णः ? ॥ ८ ॥

चित्रोत्सर्गापवादे यदिह शिवपुरीदूतभूते निशीथे
प्रागुक्त्वा भूरिभेदा गृहिगृहवसतीः कारणेऽपोद्य पश्चात् ।

स्त्रीसंसक्त्यादियुक्तेऽप्यभिहितयतनाकारिणां संयतानां
सर्वत्रागारिधाम्नि न्ययमि न तु मतः क्वापि चैत्ये निवासः ॥ ९ ॥

प्रव्रज्याप्रतिपन्थिनं ननु धनस्वीकारमाहुर्जिनाः
सर्वारम्भपरिग्रहं त्वतिमहासावद्यमाचक्षते ।

चैत्यस्वीकरणे तु गर्हिततमं स्यान्माठपत्यं यते-
रित्येवं व्रतवैरिणीति ममता युक्ता न मुक्त्यर्थिनाम् ॥ १० ॥

भवति नियतमत्रासंयमः स्याद् विभूषा
नृपतिककुदमेतल्लोकहासश्च भिक्षोः ।

स्फुटतर इह सङ्गः सातशीलत्वमुच्चै-
रिति न खलु मुमुक्षोः सङ्गतं गब्दिकाऽऽदि ॥ ११ ॥

गृही नियतगच्छभाग् जिनगृहेऽधिकारो यतेः
प्रदेयमशनादि साधुषु यथा तथाऽऽरम्भिभिः ।

व्रतादिविधिवारणं सुविहितान्तिकेऽगारिणां
गतानुगतिकैरदः कथमसंस्तुतं प्रस्तुतम् ? ॥ १२ ॥

निर्वाहार्थिनमुज्झितं गुणलवैरज्ञातशीलान्वयं
तादृग्वंशजतद्गुणेन गुरुणा स्वार्थाय मुण्डीकृतम् ।

यद् विख्यातगुणान्वया अपि जना लग्नोग्रगच्छग्रहा
देवेभ्योऽधिकमर्चयन्ति महतो मोहस्य तज्जृम्भितम् ! ॥ १३ ।

दुष्प्रापा गुरुकर्मसञ्चयवतां सद्धर्मबुद्धिर्नृणां
जातायामपि दुर्लभः शुभगुरुः प्राप्तः स पुण्येन चेत् ।

कर्तुं न स्वहितं तथाप्यलममी गच्छस्थितिव्याहताः
कं ब्रूमः कमिहाश्रयेमहि कमाराध्येम किं कुर्महे ? ॥ १४ ॥

क्षुत्क्षामः किल कोऽपि रङ्कशिशुकः प्रव्रज्य चैत्ये क्वचित्
कृत्वा कञ्चन पक्षमक्षतकलिः प्राप्तस्तदाचार्यकम् ।
चित्रं चैत्यगृहे गृहीयति निजे गच्छे कुटुम्बीयति
स्वं शक्रीयति बालिशीयति बुधान् विश्वं वराकीयति ! ॥ १५ ॥

यैर्जातो न च वर्धितो न च न च क्रीतोऽधमर्णो न च
प्राग् दृष्टो न च बान्धवो न च न च प्रेयान् न च प्रीणितः ।
तैरेवास्यधमाधमैः कृतमुनिव्याजैर्बलाद् वाह्यते
नस्योतः पशुवज्जनोऽयमनिशं नीराजकं हा ! जगत् ॥ १६ ॥

किं दिङ्मोहमिताः किमन्ध-बधिराः किं योगचूर्णाङ्किताः ?
किं दैवोपहताः किमङ्ग ! ठगिताः किं वा ग्रहावेशिताः ? ।
कृत्वा मूर्ध्नि पदं श्रुतस्य यदमी दृष्टोरुदोषा अपि
व्यावृत्तिं कुपथाज्जडा न दधतेऽसूयन्ति चैतत्कृते ॥ १७ ॥

इष्टावाप्तितुष्टविटनटभटचेटकपेटकाकुलं
निधुवनविधिनिबद्धदोहदनरनारीनिकरसङ्कुलम् ।
राग-द्वेष-मत्सरेर्ष्याघनमघपङ्केऽथ निमज्जनं
जनयत्येव च मूढजनविहितमविधिना जैनमज्जनम् ॥ १८ ॥

जिनमतविमुखविहितमहिताय न मज्जनमेव केवलं
किन्तु तपश्चरित्र-दानाद्यपि जनयति न खलु शिवफलम् ।
अविधि-विधिक्रमाज्जिनाज्ञाऽपि ह्यशुभ-शुभाय जायते
किं पुनरिति विडम्बनैवाहितहेतुर्न प्रतायते ॥ १९ ॥

जिनगृह-जिनबिम्ब-जिनपूजन-जिनयात्राऽऽदि विधिकृतं
दान-तपो-व्रतादि-गुरुभक्ति-श्रुतपठनादि चादृतम् ।
स्यादिह कुमत-कुगुरु-कुग्राह-कुबोध-कुदेशनांशतः
स्फुटमनभिमतकारि वरभोजनमिव विषलवनिवेशतः ॥ २० ॥

आक्रष्टुं मुग्ध-मीनान् बडिशपिशितवद् बिम्बमादर्श्य जैनं
तन्नाम्ना रम्यरूपानपवरक-मठान् स्वेष्टसिद्ध्यै विधाप्य ।
यात्रा-स्नात्राद्युपायैर्नमसितक-निशाजागराद्यैश्छलैश्च
श्रद्धालुर्नामजैनैश्छलित इव शठैर्वञ्च्यते हा ! जनोऽयम् ॥२१॥

सर्वत्रास्थगिताश्रवाः स्वविषयव्यासक्तसर्वेन्द्रिया
वल्गद्गौरवचण्डदण्ड-तुरगाः पुष्यत्कषायोरगाः ।
सर्वाकृत्यकृतोऽपि कष्टमधुनाऽन्त्याश्चर्यराजाश्रिताः
स्थित्वा सन्मुनिमूर्धसूद्धतधियस्तुष्यन्ति पुष्यन्ति च ॥ २२ ॥

सर्वारम्भ-परिग्रहस्य गृहिणोऽप्येकाशनाद्येकदा
प्रत्याख्याय न रक्षतो हृदि भवेत् तीव्रानुतापः सदा ।
षट्कृत्वस्त्रिविधं त्रिधेत्यनुदिनं प्रोच्यापि भञ्जन्ति ये
तेषां तु क्व तपः क्व सत्यवचनं क्व ज्ञानिता क्व व्रतम् ! ॥ २३ ॥

देवार्थव्ययतो यथारुचिकृते सर्वर्तुरम्ये मठे
नित्यस्थाः शुचिपट्टतूलिशयनाः सद्‌गण्डिकाद्यासनाः ।
सारम्भाः सपरिग्रहाः सविषयाः सेर्ष्याः सकाङ्क्षाः सदा
साधुव्याजविटा अहो ! सितपटाः कष्टं चरन्ति व्रतम् ॥ २४ ॥

इत्याद्युद्धतसोपहासवचसः स्युः प्रेक्ष्य लोकाः स्थितिं
श्रुत्वाऽन्येऽभिमुखा अपि श्रुतपथाद् वैमुख्यमातन्वते ।
मिथ्योक्त्या सुदृशोऽपि बिभ्रति मनः सन्देहदोलाचलं
येषां ते ननु सर्वथा जिनपथप्रत्यर्थिनोऽमी ततः ॥ २५ ॥

सर्वैरुत्कटकालकूटपटलैः सर्वैरपुण्योच्चयैः
सर्वव्यालकुलैः समस्तविधुराधि-व्याधि-दुष्टग्रहैः ।
नूनं क्रूरमकारि मानसममुं दुर्मार्गमासेदुषां
दौरात्म्येन निजघ्नुषां जिनपथं वाचैष सेत्यूचुषाम् ॥ २६ ॥

दुर्भेदस्फुरदुग्रकुग्रहतमःस्तोमास्तधीचक्षुषां
सिद्धान्तद्विषतां निरन्तरमहामोहादहम्मानिनाम् ।
नष्टानां स्वयमन्यनाशनकृते बद्धोद्यमानां सदा
मिथ्याचारवतां वचांसि कुरुते कर्णे सकर्णः कथम् ? ॥ २७ ॥

यत् किञ्चिद् वितथं यदप्यनुचितं यल्लोक-लोकोत्तरो-
त्तीर्णं यद् भवहेतुरेव भविनां यच्छास्त्रबाधाकरम् ।
तत् तद् धर्म इति ब्रुवन्ति कुधियो मूढास्तदर्हन्मत-
भ्रान्त्या लान्ति च हा ! दुरन्तदशमाश्चर्यस्य विस्फूर्जितम् ॥ २८ ॥

कष्टं नष्टदिशां नृणां यददृशां जात्यन्धवैदेशिकः
कान्तारे प्रदिशत्यभीप्सितपुराध्वानं किलोत्कन्धरः ।
एतत् कष्टतरं तु सोऽपि सुदृशः सन्मार्गगांस्तद्विद-
स्तद्वाक्याननुवर्तिनो हसति यत् सावज्ञमज्ञानिव ॥ २९ ॥

सैषा हुण्डावसर्पिण्यनुसमयह्रसद्भव्यभावानुभावा
त्रिंशश्चोग्रग्रहोऽयं खखनखमितिवर्षस्थितिर्भस्मराशिः ।

अन्त्यं चाश्चर्यमेतज्जिनमतहतये तत्समा दुःषमा चे-
त्येवं पुष्टेषु दुष्टेष्वनुकलमधुना दुर्लभो जैनमार्गः ॥ ३० ॥

सम्यग्मार्गपुषः प्रशान्तवपुषः प्रीतोल्लसच्चक्षुषः
श्रामण्यर्द्धिमुपेयुषः स्मयमुषः कन्दर्पकक्षप्लुषः ।

सिद्धान्ताध्वनि तस्थुषः शमजुषः सत्पूज्यतां जग्मुषः
सत्साधून् विदुषः खलाः कृतदुषः क्षाम्यन्ति नोद्यद्रुषः ॥३१॥

देवीयत्युरुदोषिणः क्षतमहादोषानदेवीयति
सर्वज्ञीयति मूर्खमुख्यनिवहं तत्त्वज्ञमज्ञीयति ।

उन्मार्गीयति जैनमार्गमपथं सम्यक्पथीयत्यहो !
मिथ्यात्वग्रहिलो जनः स्वमगुणाग्रण्यं कृतार्थीयति ॥ ३२ ॥

सङ्घत्राकृतचैत्यकूटपतितस्यान्तस्तरां ताम्यत-
स्तन्मुद्रादृढपाशबन्धनवतः शक्तस्य न स्पन्दितुम् ।

मुक्त्यै कल्पितदान-शील-तपसोऽप्येतत्क्रमस्थायिनः
सङ्घव्याघ्रवशस्य जन्तुहरिणव्रातस्य मोक्षः कुतः ? ॥ ३३ ॥

इत्थं मिथ्यापथकथनया तथ्यया ऽपीह कश्चित्
मेदं ज्ञासीदनुचितमथो मा कुपत् कोऽपि यस्मात् ।

जैनभ्रान्त्या कुपथपतितान् प्रेक्ष्य नृंस्तत्प्रमोहा-
पोहायेदं किमपि कृपया कल्पितं जल्पितं च ॥ ३४ ॥

प्रोद्भूतेऽनन्तकालात् कलिमलनिलये नाम नेपथ्यतोऽर्हन्-
मार्गभ्रान्तिं दधानेऽथ च तदभिमरे तत्त्वतोऽस्मिन् दुरध्वे ।

कारुण्याद् यः कुबोधं नृषु निरसिसिषुर्दोषसङ्ख्यां विवक्षे-
दम्भोऽम्भोधेः प्रमित्सेत् स सकलगगनोल्लङ्घनं वा विधित्सेत्॥३५॥

न सावद्याम्नाया न बकुश-कुलीशोचितयति-
क्रियामुक्ता युक्ता न मद-ममता-जीवन-भयैः ।

न संक्लेशावेशा न कदभिनिवेशा न कपट-
प्रिया ये तेऽद्यापि स्युरिह यतयः सूत्ररतयः ॥ ३६ ॥

संविग्नाः सोपदेशाः श्रुतनिकषविदः क्षेत्र-कालाद्यपेक्षा-
नुष्ठानाः शुद्धमार्गप्रकटनपटवः प्रास्तमिथ्याप्रवादाः ।

वन्द्याः सत्साधवोऽस्मिन् नियम-शम-दमौचित्य-गाम्भीर्य-धैर्य-
स्थैर्यौदार्यार्यचर्या-विनय-नय-दया-दाक्ष्य-दाक्षिण्यपुण्याः ॥३७॥

विभ्राजिष्णुमगर्वमस्मरमनाशादं श्रुतोल्लङ्घने
सज्ज्ञानद्युमणिं जिनं वरवपुः श्रीचन्द्रिकाभेश्वरम् ।
वन्दे वर्ण्यमनेकधा सुरनरैः शक्रेण चैनश्छिदं
दम्भारिं विदुषां सदा सुवचसाऽनेकान्तरङ्गप्रदम् ।। ३८ ।।

जिनपतिमतदुर्गे कालतः साधुवेषै-
र्विषयिभिरभिभूते भस्मक-म्लेच्छसैन्यैः ।
स्ववशजडजनानां शृङ्खलेव स्वगच्छे
स्थितिरियमधुना तैरप्रथि स्वार्थसिद्ध्यै ।। ३९ ।।

सम्प्रत्यप्रतिमे कुसङ्घवपुषि प्रोज्जृम्भिते भस्मक-
म्लेच्छातुच्छबले दुरन्तदशमाश्चर्ये च विस्फूर्जति ।
प्रौढिं जग्मुषि मोहराजकटके लोकैस्तदाज्ञापरै-
रेकीभूय सदागमस्य कथयाऽपीत्थं कदर्थ्यामहे ।। ४० ।।

इति सङ्घपट्टकः समाप्तः ।।

# (२)

## श्रीजिनदत्तसूरिविरचितं

# गणधरसार्धशतकम् ।

गुणमणिरोहणगिरिणो रिसहजिणिंदस्स पढममुणिवइणो ।
सिरिउसभसेणगणहारिणोऽणहे पणिवयामि पए ॥ १ ॥
अजियाइजिणिंदाणं जणियाणंदाण पणयपाणीणं ।
थुणिमोऽदीणमणो हं गणहारीणं गुणगणोहं ॥ २ ॥

**गौतमः—**

सिरिवद्धमाणवरनाण-चरण-दंसणमणीण जलनिहिणो ।
तिहुयणपहुणो पडिहणियसत्तुणो सत्तमो सीसो ॥ ३ ॥
संखाइए वि भवे साहिंतो जो समत्तसुयनाणी ।
छउमत्थेण न नज्जइ एसो न हु केवली होइ ॥ ४ ॥
तं तिरिय-मणुय-दाणव-देविंदनमंसियं महासत्तं ।
सिरिनाणसिरिनिहाणं गोयमगणहारिणं वंदे ॥ ५ ॥

**सुधर्मस्वामी—**

जिणवद्धमाणमुणिवइसमप्पियासेसतित्थभारधरणेहिं ।
पडिहयपडिवक्खेणं जयम्मि धवलाइयं जेण ॥ ६ ॥

---

## संस्कृतच्छाया ।

गुणमणिरोहणगिरे **ऋषभ**जिनेन्द्रस्य प्रथममुनिपतेः ।
श्री**ऋषभसेन**गणधारिणोऽनघौ प्रणिपतामि पदौ ॥ १ ॥
**अजितादि**जिनेन्द्राणां जनितानन्दानां प्रणतप्राणिनाम् ।
स्तौम्यदीनमना अहं गणधारिणां गुणगणौघम् ॥ २ ॥
श्री**वर्धमान**वरज्ञान-चरण-दर्शनमणीनां जलनिधेः ।
त्रिभुवनप्रभोः प्रतिहतशत्रोः सत्तमः शिष्यः ॥ ३ ॥
सङ्ख्यातीतानपि भवान् कथयन् यः समस्तश्रुतज्ञानी ।
छद्मस्थेन न ज्ञायत एष न खलु केवली भवति ॥ ४ ॥
तं तिर्यग्-मनुज-दानव-देवेन्द्रनमस्यितं महासत्त्वम् ।
श्रीज्ञानश्रीनिधानं **गौतम**गणधारिणं वन्दे ॥ ५ ॥
जिन**वर्धमान**मुनिपतिसमर्पिताशेषतीर्थभारधरणैः ।
प्रतिहतप्रतिपक्षेण जगति धवलायितं येन ॥ ६ ॥

तं तिहुयणपणयपयारविंदमुद्दामकामकरिसरहं ।
अणहं सुहम्मसामिं पंचमठाणट्ठिय वंदे ॥ ७ ॥

जम्बूः—

तारुण्णे वि हु णो तरलतारअद्धच्छिपिच्छिरीहिं मणो ।
मणयं पि मुणियपवयणसब्भावं भामियं जस्स ॥ ८ ॥
मण–परमोहिप्पमुहाणि परमपुरपत्थिएण जेण समं ।
समइक्कंताणि समग्ग(त्त)भव्वजणजणियसुक्खाणि ॥ ९ ॥
तं जंबुनामनामं सुहम्मगणहारिणो गुणसमिद्धं ।
सीसं सुसीसनिलयं गणहरपयपालयं वंदे ॥ १० ॥

प्रभवाचार्यः—

संपत्तवरविवेयं वयत्थिगिहिजंबुनामवयणाओ ।
पालियजुगपवरपयं पभवायरियं सया वंदे ॥ ११ ॥

शय्यम्भवः—

कट्ठमहो ! परमेयं तत्तं न मुणिज्जइ त्ति सोऊणं ।
सिज्जंभवं भवाओ विरत्तचित्तं नमंसामि ॥ १२ ॥

यशोभद्र–सम्भूतसूरी—

संजणियपणयभद्दं जसभद्दं मुणिगणाहिवं सगुणं ।
संभूयं सुहसंभूइभायणं सूरिमणुसरिमो ॥ १३ ॥

---

तं त्रिभुवनप्रणतपदारविन्दमुद्दामकामकरिशरभम् ।
अनघं **सुधर्म**स्वामिनं पञ्चमस्थानस्थितं वन्दे ॥ ७ ॥
तारुण्येऽपि हि नो तरलताराधाक्षिप्रेक्षमाणाभिर्मनः ।
मनागपि ज्ञातप्रवचनसद्भावं भ्रामितं यस्य ॥ ८ ॥
मनः–परमावधिप्रमुखानि परमपुरप्रस्थितेन येन समम् ।
समतिक्रान्तानि समस्तभव्यजनितसौख्यानि ॥ ९ ॥
तं **जम्बू**नामनामं **सुधर्म**गणधारिणो गुणसमृद्धम् ।
शिष्यं सुशिष्यनिलयं गणधरपदपालकं वन्दे ॥ १० ॥
सम्प्राप्तवरविवेकं व्रतार्थिगृहि**जम्बू**नामवचनात् ।
पालितयुगप्रवरपदं **प्रभवाचार्यं** सदा वन्दे ॥ ११ ॥
कष्टमहो ! परमेतत्तत्त्वं न ज्ञायते इति श्रुत्वा ।
**शय्यम्भवं** भवाद् विरक्तचित्तं नमस्यामि ॥ १२ ॥
सञ्जनितप्रणतभद्रं **यशोभद्रं** मुनिगणाधिपं सगुणम् ।
**सम्भूतं** सुखसम्भूतिभाजनं सूरिमनुस(स्म)रामः ॥ १३ ॥

